॥ श्रीः ॥ 110

# हरिदास संस्कृत ग्रन्थमाला

१३




श्रीविष्णुशर्मसङ्कलितं

# पञ्चतन्त्रकम्

( परीक्षानिर्धारितं निषिद्धाऽश्लीलांशवर्जम् )

पण्डित श्रीभानुदत्तशास्त्रिणा कृतया विषमस्थल-
बोधिन्या विवृत्त्या सहितम्

( सम्पूर्णम् )



प्रकाशक :

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९७७



# प्राक्कथन

संस्कृत के प्रेमियों एवं विद्यार्थियों से यह कहने की विशेष आवश्यकता नहीं कि संस्कृतसाहित्य में पञ्चतन्त्र कितना उपयोगी और महत्त्वपूर्ण ग्रन्थ समझा जाता है। उपयोगिता तथा महत्ता के कारण ही इसको भारत की सभी सरकारी और स्वतन्त्र संस्कृतशिक्षा-संस्थाओं की अनेक परीक्षाओं में स्थान प्राप्त हो चुका है।

भाषा की सरलता और रोचक-वर्णनशैली ये दोनों गुण एक स्थान पर प्रायः देखने में नहीं आते; किन्तु इस ग्रन्थ के कुशल संग्रहकार ने उक्त दोनों गुणों का एकत्र समावेश जिस कुशलता एवं सफलता के साथ किया है उसका परिचय पाठकों को आदि से अन्त तक मिलेगा।

थोड़े से शब्दों में सुगमता के साथ नीति जैसे गूढ़ विषय और अति जटिल लोकव्यवहार के मर्म को प्रकट करने में तो यह ग्रन्थ अपना जोड़ नहीं रखता! यद्यपि इसकी उपादेयता में किसी को सन्देह नहीं तथापि इसका अश्लील गद्य-पद्यभाग बालकों के लिए अत्यन्त अनिष्टकारी होने के कारण शिक्षा के अनुभवी विद्वानों को बहुत खटकता था। सम्भवतः यही समझ कर विश्व-विद्यालयों के अधिकारियों ने भी उक्त भाग को पाठचविधि से निकाल दिया है। अत एव प्रस्तुत ग्रन्थ का एक ऐसा संस्करण अपेक्षित था जो अश्लीलता से उन्मुक्त होने के साथ-साथ पाठचविधि के अनुकूल हो।

यह संस्करण ऊपर की दोनों बातों को ध्यान में रखकर निकाला गया है। हमें अपने कार्य में सफलता कहाँ तक हुई है इसका अनुमान तो अल्प समय में इसका अनेक संस्करण प्रकाशित होने से ही हो रहा है। आशा है संस्कृत के शुभचिन्तक तथा प्रेमी पाठक इस ग्रन्थ को और भी विशेष अपना अपना कर हमको सरस्वतीसेवा का अधिकाधिक अवसर प्रदान करेंगे।

विनीत

--प्रकाशक

# पञ्चतन्त्र-विषयसूची





---

॥ श्रीः ॥

# [1]पञ्चतन्त्रम्

## कथामुखम्

ब्रह्मा रुद्रः कुमारो रविवरुणयमा वह्निरिन्द्रः कुबेर-
श्चन्द्रादित्यौ सरस्वत्युदधियुगनगा वायुरुर्वी भुजङ्गाः ।
सिद्धा नद्योऽश्विनौ श्रीर्दितिरदितिसुता मातरश्चण्डिकाद्या
वेदास्तीर्थानि यज्ञा गणवसुमुनयः पान्तु नित्यं ग्रहाश्च ॥ १ ॥
मनवे वाचस्पतये शुक्राय पराशराय ससुताय ।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः ॥ २ ॥
सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम् ।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥ ३ ॥

तद्यथाऽनुश्रूयते--अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र [2]सकलार्थिकल्पद्रुमः [3]प्रवरनृपमुकुटमणिमरीचिमञ्जरीचर्चित-चरणयुगलः [4]सकलकलापारङ्गतोऽमरशक्तिर्नाम राजा बभूव । तस्य त्रयः पुत्राः [5]परमदुर्मेधसो बहुशक्तिरुग्रशक्तिरनन्तशक्तिश्चेतिनामानो बभूवुः । अथ राजा ताञ्शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच— 'भोः' ! ज्ञातमेतद्भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च तदेतान् पश्यतो मे महदपि राज्यं न [6]सौख्यमावहति ।

---

१. पञ्चानां तन्त्राणां समाहार इति विग्रहः, पञ्च तन्त्राणि नीतिसिद्धान्ता वा यत्र तत्तथोक्तमिति वा । २. सकलानामर्थिनां याचकानां कल्पद्रुमः सकलार्थि-मनोरथपूरक इति भावः । ३. प्रवराणां श्रेष्ठानां नृपाणां मुकुटमणीनां किरीटगत-मुक्तादीनां मरीचिमञ्जरीभिः किरणसमूहैः अर्चितं पूजितं चरणयुगलं पादद्वयं यस्य सः । ४. सकलानां कलानां चतुष्षष्टिप्रभेदानां पारङ्गतः पण्डितः । ५. अति-दुर्बुद्धयः । ६. सुखं ददाति ।

अथवा साध्विदमुच्यते—

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम्।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत्॥ ४॥
किं तया क्रियते धेन्वा या न सूते न दुग्धदा।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न भक्तिमान्॥ ५॥
गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमा यस्य।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति॥ ६॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम्। अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति। ततो यथा मम मनोरथाः सिद्धिं यान्ति तथानुष्ठीयताम्' इति। तत्रैकः प्रोवाच—'देव! द्वादशभिर्वर्षैर्व्याकरणं श्रूयते, ततो धर्मशास्त्राणि मन्वादीनि। अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि। एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते, ततः 'प्रतिवोधनं भवति।' अथ तन्मध्यतः सुमतिर्नाम सचिवः प्राह—'अ²शाश्वतोऽयं ³जीवितव्यविषयः, प्रभूतकालज्ञेयानि शब्दशास्त्राणि, तत्संक्षेपमात्रं शास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यतामिति। उक्तं च यतः—

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात्॥ ७॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारङ्गमश्छात्रसंसदि लब्धकीर्तिः। तस्मै समर्पयतु एतान्। स नूनं '⁴द्राक्प्रबुद्धान्करिष्यति' इति। स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच—'भो भगवन्! मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग्यथा अनन्यसदृशान्विदधासि तथा कुरु, तदाहं ⁵त्वां शासनशतेन योजयिष्यामि।' अथ विष्णुशर्मा तं राजानमूचे—'देव! श्रूयतां मे तथ्यवचनम् नाहं विद्याविक्रयं शासनशतेनापि करोमि। पुनरेतांस्तव पुत्रान्मासषट्केन यदि नीतिशास्त्रज्ञान्न करोमि ततः स्वनामत्यागं करोमि। किं बहुना श्रूयतां ममैष सिंहनादः। नाहमर्थलिप्सु-

१. तत्तद्विषयको बोधः। २. नश्वरः स्वल्प इति भावः। ३. आयुः। ४. शीघ्रम्। ५. पारितोषिकरूपेण ग्रामशतं तुभ्यं प्रदास्यामीत्यर्थः।

ब्रवीमि । ममाशीतिवर्षस्य [1]व्यावृत्तसर्वेन्द्रियार्थस्य न किञ्चिदर्थेन प्रयोजनम् । त्वत्प्रार्थनासिद्ध्यर्थं [2]सरस्वतीविनोदं करिष्यामि । तल्लिख्यतामद्यतनो दिवसः, यद्यहं षण्मासाभ्यन्तरे तव पुत्रान्नयशास्त्रं प्रत्यनन्यसदृशान्न करिष्यामि ततो नार्हति [3]देवो देवमार्गं सन्दर्शयितुम् ।

अथासौ राजा तां ब्राह्मणस्यासम्भाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितस्तस्मै सादरं तान्कुमारान्समर्प्य परां निर्वृतिमाजगाम । विष्णुशर्मणापि तानादाय तदर्थं मित्रभेद–मित्रसंप्राप्ति–काकोलूकीय–लब्धप्रणाश–अपरीक्षितकारकाणि चेति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः । तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः । ततःप्रभृत्येतत्पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले प्रवृत्तम् । किं बहुना

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च ।
न पराभवमाप्नोति शक्रादपि कदाचन ॥ ८ ॥

इति कथामुखम् ।



## मित्रभेदः

अथातः प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रम् । यस्यायमादिमश्लोकः—

वर्धमानो महान् स्नेहः सिंहगोवृषयोर्वने ।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र [4]धर्मोपार्जितभूरिविभवो वर्धमानको नाम वणिक्पुत्रो बभूव । तस्य कदाचिद्रात्रौ शय्यारूढस्य चिन्ता समुत्पन्ना—यत्प्रभूतेऽपि वित्ते[5]ऽर्थोपायाश्चिन्तनीयाः कर्तव्याश्चेति ।

---

१. विषयवासनारहितस्य । २. सरस्वत्या आराधनम् । ३. ईश्वरः सद्गतिं न ददात्वित्यर्थः । ४. धर्मेण न्यायेन उपार्जितः सञ्चितः भूरिः प्रभूतः विभवः येन सः । ५. वित्तप्राप्तेः साधनानि ।

यत उक्तञ्च—न हि तद्विद्यते किञ्चिद्यदर्थेन न सिद्ध्यति।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमांल्लोके यस्यार्थाः स च पण्डितः ॥ ३ ॥
न सा विद्या न तद्दानं न तच्छिल्पं न सा कला।
न तत्स्थैर्यं हि धनिनां याचकैर्यन्न गीयते ॥ ४ ॥
इह लोके हि धनिनां परोऽपि स्वजनायते।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ ५ ॥
अर्थेभ्योऽपि हि वृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः।
प्रवर्तन्ते क्रियाः सर्वाः पर्वतेभ्य इवापगाः ॥ ६ ॥
पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ ७ ॥
अशनादिन्द्रियाणीव स्युः कार्याण्यखिलान्यपि।
एतस्मात्कारणाद्वित्तं सर्वसाधनमुच्यते ॥ ८ ॥
अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते।
त्यक्त्वा जनयितारं स्वं निःस्वं गच्छति दूरतः ॥ ९ ॥
गतवयसामपि पुंसां येषामर्था भवन्ति ते तरुणाः।
अर्थेन तु ये हीना वृद्धास्ते यौवनेऽपि स्युः ॥ १० ॥

स चार्थः पुरुषाणां षड्भिरुपायैर्भवति—भिक्षया, नृपसेवया, कृषिकर्मणा, विद्योपार्जनेन, व्यवहारेण, वणिक्कर्मणा वा। सर्वेषामपि तेषां वाणिज्येनातिरस्कृतोऽर्थलाभः स्यात्। उक्तं च यतः—

कृता भिक्षानेकैर्वितरति नृपो नोचितमहो
कृषिः क्लिष्टा, विद्या गुरुविनयवृत्त्यातिविषमा।
कुसीदाद्दारिद्र्यं परकरगतग्रन्थिशमना-
न्न मन्ये वाणिज्यात्किमपि परमं वर्तनमिह ॥ ११ ॥
उपायानां च सर्वेषामुपायः पण्यसंग्रहः।
धनार्थं शस्यते ह्येकस्तदन्यः संशयात्मकः ॥ १२ ॥

तच्च वाणिज्यं सप्तविधमर्थागमाय स्यात्। तद्यथा—[1]गान्धिकव्यव-

---

१. गन्धद्रव्याणां वासिततैलादीनां यो व्यापारः सः।

द्वारः, [१]निक्षेपप्रवेशः, [२]गोष्ठिककर्म, [३]परिचितग्राहकागमः, [४]मिथ्याक्रय-कथनम्, [५]कूटतुलामानम्, [६]देशान्तराद्भाण्डानयनं चेति। उक्तं च---

पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः।
यत्रैकेन च यत्क्रीतं तच्छतेन प्रदीयते॥ १३॥
निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम्।
निक्षेपी म्रियते तुभ्यं प्रदास्याम्युपयाचितम्॥ १४॥
गोष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः।
वसुधा वसुसम्पूर्णा मयाद्य लब्धा किमन्येन॥ १५॥
परिचितमागच्छन्तं ग्राहकमुत्कण्ठया विलोक्यासौ।
हृष्यति तद्धनलुब्धो यद्वत्पुत्रेण जातेन॥ १६॥

अन्यच्च-पूर्णापूर्णे माने परिचितजनवञ्चनं तथा नित्यम्।
मिथ्याक्रयस्य कथनं प्रकृतिरियं स्यात्किरातानाम्॥ १७॥

अन्यच्च-द्विगुणं त्रिगुणं वित्तं भाण्डक्रयविचक्षणाः।
प्राप्नुवन्त्युद्यमाल्लोका दूरदेशान्तरं गताः॥ १८॥

इत्येवं सम्प्रधार्य मथुरागामीनि भाण्डान्यादाय शुभायां तिथौ गुरुजनानुज्ञातः सुरथाधिरूढः प्रस्थितः। तस्य च मङ्गलवृषभौ संजीवकनन्दकनामानौ गृहोत्पन्नौ धूर्वोढारौ स्थितौ। तयोरेकः संजीवकाभिधानो [७]यमुनाकच्छमवतीर्णः सन्, [८]पङ्कपूरमासाद्य, [९]कलितचरणो युगभंगं विधाय, [१०]निषसाद। अथ तं तदवस्थमालोक्य वर्धमानः परं विषादमगमत्। तदर्थं च स्नेहार्द्रहृदयस्त्रिरात्रं [११]प्रयाणभङ्गमकरोत्।

---

१. एतावति काले गते मया स्वकीयं धनादिकं ग्रहीष्यत इति नियमेन यत् स्वधनादेः कस्यचिद् धनवतः समीपे स्थापनं तदेव निक्षेपः, तस्य प्रवेशः प्राप्तिः। २. गवादीनां क्रयविक्रयरूपो व्यवसायः। ३. परिचितानां ग्राहकाणामागमनम्। परिचितग्राहका हि भूयो भूयो मूल्यं नैव पृच्छन्ति, तेषां पुरतो यदेवोच्यते तेनैव क्रेयं क्रीणन्तीति तत्सकाशादधिकलाभसम्भवः। ४. अल्पमूल्येन क्रीतस्य वस्तुनः क्रेतॄणां पुरतः समधिकमूल्यकथनम्। ५. तुलया विक्रेयवस्तूनां कपटपूर्वकं न्यूनाधिकभावेन तोलनम्। ६. अन्यस्माद् देशाद् विक्रेयवस्तूनां स्वल्पमूल्येन स्वदेशे आनयनं प्रभूतेन मूल्येन विक्रयः। ७. यमुनातटम्। ८. कर्दममयप्रदेशमित्यर्थः। ९. कर्दमप्रोतपादः। १०. उपविष्टः। ११. गमनावरोधम्।

अथ तं विपन्नमालोक्य [1]सार्थिकैरभिहितम्—'भोः श्रेष्ठिन्, किमेवं वृषभस्य कृते [2]सिंहव्याघ्रसमाकुले [3]बह्वपायेऽस्मिन् वने समस्तसार्थस्त्वया [4]सन्देहे नियोजितः। उक्तं च—

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः।
एतदेवात्र पाण्डित्यं यत्स्वल्पाद् भूरि रक्षणम् ॥ १९ ॥

अथासौ तदवधार्य सञ्जीवकस्य रक्षापुरुषान्निरूप्याशेषसार्थं नीत्वा प्रस्थितः। अथ रक्षापुरुषा अपि बह्वपायं तद्वनं विदित्वा सञ्जीवकं परित्यज्य पृष्ठतो गत्वान्येद्युस्तं सार्थवाहं मिथ्याहुः—'स्वामिन्, मृतोऽसौ सञ्जीवकः। अस्माभिस्तु सार्थवाहस्याभीष्ट इति मत्वा वह्निना संस्कृत' इति। तच्छ्रुत्वा [5]सार्थवाहः कृतज्ञतया स्नेहार्द्रहृदयस्तस्यौर्ध्वदेहिकक्रिया वृषोत्सर्गादिकाः सर्वाश्चकार। सञ्जीवकोऽप्यायुःशेषतया यमुनासलिलमिश्रैः शिशिरतरवातैराप्यायितशरीरः कथञ्चिदप्युत्थाय यमुनातटमुपपेदे। तत्र मरकतसदृशानि बालतृणाग्राणि भक्षयन्कतिपयैरहोभिर्हरवृषभ इव पीनः ककुद्मान्बलवांश्च संवृत्तः, प्रत्यहं वल्मीकशिखराग्राणि शृङ्गाभ्यां विदारयन्गर्जमान आस्ते। साधु चेदमुच्यते—

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ २० ॥

अथ कदाचित्पिङ्गलको नाम सिंहः सर्वमृगपरिवृतः पिपासाकुल उदकपानार्थं यमुनातटमवतीर्णः सञ्जीवकस्य गम्भीरतररावं दूरादेवाशृणोत्। तच्छ्रुत्वातीव व्याकुलहृदयः [6]ससाध्वसमाकारं प्रच्छाद्य वटतले चतुर्मण्डलावस्थानेनावस्थितः। चतुर्मण्डलावस्थानं त्विदम्—सिंहः, सिंहानुयायिनः, काकरवाः, किंवृत्ता इति। अथ तस्य करटकदमनकनामानौ द्वौ शृगालौ मन्त्रिपुत्रौ भ्रष्टाधिकारौ सदानु-

---

१. सहचरैः। २. हिंसकजन्तुपरिपूर्णे इत्यर्थः। ३. विपद्बहुले। ४. सङ्कटे। ५. वणिक्। ६. भीताकृतिं संगोप्य निर्भयतां प्रकाश्य इति भावः।

श्यिनावास्ताम्। तौ च परस्परं मन्त्रयतः। तत्र दमनकोऽब्रवीत्—'भद्र करटक, अयं तावदस्मत्स्वामी पिङ्गलक उदकग्रहणार्थं यमुनाकच्छमवतीर्य स्थितः। स किं निमित्तं पिपासाकुलोऽपि निवृत्त्य व्यूहरचनां विधाय 'दौर्मनस्येनाभिभूतोऽत्र वटतले स्थितः।' करटक आह—'भद्र! आवयोर्भक्तिशेष आहारोऽस्त्येव, तत्किमनेन व्यापारेण।'

दमनक आह—'तत्किं भवानाहारार्थी केवलमेव, तन्न युक्तम्।

उक्तं च—सुहृदामुपकारकारणाद् द्विषतामप्यपकारकारणात्।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम्॥ २१॥

किञ्च—यस्मिञ्जीवति जीवन्ति बहवः सोऽत्र जीवतु।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम्॥ २२॥

तथा च—यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानशौर्यविभवार्यगुणैः समेतम्।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोपि जीवति चिराय बलिं च भुङ्क्ते॥ २३॥

यो नात्मना न च परेण च बन्धुवर्गे
दीने दयां न कुरुते न च मर्त्यवर्गे।
किं तस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते॥ २४॥

सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः।
सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति॥ २५॥

किञ्च—परिवर्तिनि संसारे मृतः को वा न जायते।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाधिकः॥ २६॥

किञ्च—जातस्य नदीतीरे तस्यापि तृणस्य जन्मसाफल्यम्।
यत्सलिलमज्जनाकुलजनहस्तालम्बनं भवति॥ २७॥

तथा च—स्तिमितोन्नतसञ्चारा जनसन्तापहारिणः।
जायन्ते विरला लोके जलदा इव सज्जनाः॥ २८॥

---

१. उद्विग्नः।

निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः ।
यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ २९ ॥
अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः' ॥ ३० ॥

करटक आह—आवां तावदप्रधानौ, तत्किमावयोरनेन व्यापारेण ।

उक्तञ्च—अपृष्टोऽत्राप्रधानो यो ब्रूते राज्ञः पुरः कुधीः ।
न केवलमसम्मानं लभते च विडम्बनाम् ॥ ३१ ॥

तथा च—वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् ।
स्थायी भवति चात्यन्तं रागः शुक्लपटे यथा ॥ ३२ ॥

दमनक आह—मा मैवं वद ।

अप्रधानः प्रधानः स्यात्सेवते यदि पार्थिवम् ।
प्रधानोऽप्यप्रधानः स्याद्यदि सेवाविवर्जितः ॥ ३३ ॥

तथा च—कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः ।
आरोहन्ति शनैः पश्चाद् धुन्वन्तमपि पार्थिवम् ॥ ३४ ॥
विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम् ।
सेवावृत्तिविदां चैव नाश्रयः पार्थिवं विना ॥ ३५ ॥
ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च ।
तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ ३६ ॥
ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः ।
प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ ३७ ॥
सर्पान्व्याघ्रान्गजान्सिंहान्दृष्टोपायैर्वशीकृतान् ।
राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ ३८ ॥
राजानमेव संश्रित्य विद्वान्याति परां गतिम् ।
विना मलयमन्यत्र चन्दनं न प्ररोहति ॥ ३९ ॥
धवलान्यातपत्राणि वाजिनश्च मनोरमाः ।
सदा मत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ ॥ ४० ॥

करटक आह—'अथ भवान्किं कर्तुमनाः ।' सोऽब्रवीत्—'अद्यास्मत्स्वामी पिङ्गलको भीतो भीतपरिवारश्च वर्तते । तदेनं गत्वा भयका-

रणं विज्ञाय [1]संधि-विग्रह-यान-आसान-संश्रय-द्वैधीभावानामेकतमेन संविधास्ये।' सोऽब्रवीत्—'ज्ञेयं किमत्र।

यतं उक्तं च—उदीरितोऽर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहन्ति चोदिताः।
अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः॥ ४१॥

तथा च मनुः—आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः॥ ४२॥

तदद्यैनं भयाकुलं प्राप्य स्वबुद्धिप्रभावेण निर्भयं कृत्वा वशीकृत्य च निजां [2]साचिव्यपदवीं [3]समासादयिष्यामि।' करटक आह—'अनभिज्ञो भवान्सेवाधर्मस्य तत्कथमेनं वशीकरिष्यति।' सोऽब्रवीत्—'कथमहं सेवानभिज्ञः। मया हि [4]तातोत्सङ्गे क्रीडता अभ्यागतसाधूनां नीतिशास्त्रं पठतां यच्छ्रुतं सेवाधर्मस्य सारभूतं हृदि स्थापितम्। श्रूयतां तच्चेदम्—

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥ ४३॥
सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः।
आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा॥ ४४॥
यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः।
न हि तस्मात्फलं किञ्चित्सुकृष्टादूषरादिव॥ ४५॥
द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः।
भवत्याजीवनं तस्मात्फलं कालान्तरादपि॥ ४६॥
अपि स्थाणुवदासीनः शुष्यन्परिगतः क्षुधा।
न त्वेवानात्मसम्पन्नाद् वृत्तिमीहेत पण्डितः॥ ४७॥

---

१. विरोधवतां परस्परं मेलनं सन्धिः। अरिराज्ये दाहलुण्ठनादिकरणं विग्रहः। शत्रुं प्रति विजिगीषोर्गमनं यानम्। शक्तिप्रतिबन्धे सति दुर्गादिकं कृत्वा तत्र स्थितस्य कालप्रतीक्षा आसनम्। शत्रुणा बाध्यमानस्य तदपेक्षया बलवत आश्रयणम् आश्रयः। प्रबलैः सह सन्धिः निर्बलैः सह युद्धकरणम् 'द्वैधीभावः' सन्देहेनावस्थानं वा। २. मन्त्रिपदम्। ३. प्राप्स्यामि। ४. पितुः क्रोडे।

सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम् ।
आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ ४८ ॥
यमाश्रित्य न विश्रामं क्षुधार्त्ता यान्ति सेवकाः ।
सोऽर्कवन्नृपतिस्त्याज्यः सदा पुष्पफलोऽपि सन् ॥ ४९ ॥
राजमातरि देव्यां च कुमारे मुख्यमन्त्रिणि ।
पुरोहिते प्रतीहारे सदा वर्तेत राजवत् ॥ ५० ॥
जीवेति प्रब्रुवन्प्रोक्तः कृत्याकृत्यविचक्षणः ।
करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ ५१ ॥
अन्तःपुरचरैः सार्धं यो न मन्त्रं समाचरेत् ।
न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ ५२ ॥
द्यूतं यो यमदूताभं हालां हालाहलोपमाम् ।
पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ ५३ ॥
युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे ।
प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ५४ ॥
सम्मतोऽहं विभोर्नित्यमिति मत्वा व्यतिक्रमेत् ।
कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभः ॥ ५५ ॥
द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् ।
यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ ५६ ॥
प्रोक्तं प्रत्युत्तरं नाह विरुद्धं प्रभुणा च यः ।
न समीपे हसत्युच्चैः स भवेद्राजवल्लभः ॥ ५७ ॥
यो रणं शरणं तद्वन्मन्यते भयवर्जितः ।
प्रवासं स्वपुरावासं स भवेद्राजवल्लभः ॥ ५८ ॥
न कुर्यान्नरनाथस्य योषिद्भिः सह सङ्गतिम् ।
न निन्दां न विवादं च स भवेद्राजवल्लभः ॥ ५९ ॥

करटक आह—'भवांस्तत्र गत्वा किं तावत्प्रथमं वक्ष्यति, तत्तावदुच्यताम् । दमनक आह—

उत्तरादुत्तरं वाक्यं वदतां सम्प्रजायते ।
सुवृष्टिगुणसम्पन्नाद्बीजाद्बीजमिवापरम् ॥ ६० ॥

अपायसन्दर्शनजां विपत्तिमुपायसन्दर्शनजां च सिद्धिम्।
मेधाविनो नीतिगुणप्रयुक्तां पुरः स्फुरन्तीमिव वर्णयन्ति ॥ ६१ ॥

एकेषां वाचि शुकवदन्येषां हृदि मूकवत्।
हृदि वाचि तथान्येषां वल्गु वल्गन्ति सूक्तयः ॥ ६२ ॥

न चाहं[1]अप्राप्तकालं वक्ष्ये। आकर्णितं मया नीतिसारं पितुः पूर्वमुत्सङ्गं हि[2] निषेवता।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन्।
लभते बह्ववज्ञानमपमानं च पुष्कलम् ॥ ६३ ॥

करटक आह—दुराराध्या हि राजानः पर्वता इव सर्वदा।
व्यालाकीर्णाः सुविषमाः कठिना दुष्टसेविताः ॥ ६४ ॥

तथा च—भोगिनः कञ्चुकाविष्टाः कुटिलाः क्रूरचेष्टिताः।
सुदुष्टा मन्त्रसाध्याश्च राजानः पन्नगा इव ॥ ६५ ॥

द्विजिह्वाः क्रूरकर्माणोऽनिष्टाश्छिद्रानुसारिणः।
दूरतोऽपि हि पश्यन्ति राजानो भुजगा इव ॥ ६६ ॥

स्वल्पमप्यपकुर्वन्ति येऽभीष्टा हि महीपतेः।
ते वह्नाविव दह्यन्ते पतङ्गाः पापचेतसः ॥ ६७ ॥

दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम्।
स्वल्पेनाप्यपकारेण ब्राह्मण्यमिव दुष्यति ॥ ६८ ॥

दुराराध्याः श्रियो राज्ञां दुरापा दुष्परिग्रहाः।
तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्थिताः ॥ ६९ ॥

दमनक आह—सत्यमेतत्परम्। किन्तु—

यस्य यस्य हि यो भावस्तेन तेन समाचरेत्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ७० ॥

भर्तुश्चित्तानुवर्तित्वं सुवृत्तं चानुजीविनाम्।
राक्षसाश्चापि गृह्यन्ते नित्यं छन्दानुवर्तिभिः ॥ ७१ ॥

सरुषि नृपे स्तुतिवचनं तदभिमते प्रेम तद्द्विषि द्वेषः।
तद्दानस्य च शंसा अमन्त्रतन्त्रं वशीकरणम् ॥ ७२ ॥

---

१. कालप्रतिकूलम्। २. अधितिष्ठता।

करटक आह—'यद्येवमभिमतं तर्हि शिवास्ते पन्थानः सन्तु, यथाभिलषितमनुष्ठीयताम्।' सोऽपि प्रणम्य पिङ्गलकाभिमुखं प्रतस्थे।

अथागच्छन्तं दमनकमालोक्य पिङ्गलको द्वाःस्थमब्रवीत्—'अपसार्यतां वेत्रलता। अयमस्माकं चिरन्तनो मन्त्रिपुत्रो दमनकोऽव्याहतप्रवेशः। तत्प्रवेश्यतां द्वितीयमण्डलभागी' इति। स आह—'यथावादीद्भगवान्' इति। अथोपसृत्य दमनको निर्दिष्ट आसने पिङ्गलकं प्रणम्य प्राप्तानुज्ञ उपविष्टः। स तु तस्य नखकुलिशालंकृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच—'अपि शिवं भवतः? कस्माच्चिराद् दृष्टोऽसि।' दमनक आह—'न किञ्चिद्देवपादानामस्माभिः प्रयोजनम्' परं भवतां प्राप्तकालं वक्तव्यम्, यत उत्तममध्यमाधमैः सर्वैरपि राज्ञां प्रयोजनम्।

उक्तञ्च—दन्तस्य निष्कोषणकेन नित्यं कर्णस्य कण्डूयनकेन वापि।
तृणेन कार्यं भवतीश्वराणां किमङ्गवाग्घस्तवता नरेण॥ ७३॥

तथा वयं देवपादानामन्वयागता भृत्या आपत्स्वपि पृष्ठगामिनो यद्यपि स्वमधिकारं न लभामहे तथापि देवपादानामेतद्युक्तं न भवति।

उक्तञ्च—स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च।
नहि चूडामणिः पादे प्रभवामीति बध्यते॥ ७४॥

यतः—अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते।
धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः॥ ७५॥

उक्तञ्च—असमैः समीयमानः समैश्च परिहीयमाणसत्कारः।
धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः॥ ७६॥

यच्च अविवेकितया राजा भृत्यानुत्तमपदयोग्यान्हीनाधमस्थाने नियोजयति, न ते तत्रैव तिष्ठन्ति, स भूपतेर्दोषो न तेषाम्।

उक्तञ्च—कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रतिबध्यते।
न स विरौति न चापि स शोभते भवति योजयितुर्वचनीयता॥

यच्च स्वाम्येवं वदति 'चिराद् दृश्यते', तदपि श्रूयताम्—

सव्यदक्षिणयोर्यत्र विशेषो नास्ति हस्तयोः।
कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत्॥ ७८॥

काचे मणिमणौ काचो येषां बुद्धिर्विकल्पते ।
न तेषां सन्निधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ ७९ ॥
परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि ।
आभीरदेशे किल चन्द्रकान्तं त्रिभिर्वराटैर्विपणन्ति गोपाः ॥ ८० ॥
लोहिताख्यस्य च मणेः पद्मरागस्य चान्तरम् ।
यत्र नास्ति कथं तत्र क्रियते रत्नविक्रयः ॥ ८१ ॥
निर्विशेषं यदा स्वामी समं भृत्येषु वर्तते ।
तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ ८२ ॥
न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना ।
तेषां च व्यवहारोऽयं परस्परनिबन्धनः ॥ ८३ ॥
भृत्यैर्विना स्वयं राजा लोकानुग्रहकारिभिः ।
मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते ॥ ८४ ॥
अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः ।
स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८५ ॥
शिरसा विधृता नित्यं स्नेहेन परिपालिताः ।
केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ८६ ॥
राजा तुष्टो हि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु सम्मानमात्रेण प्राणैरप्युपकुर्वते ॥ ८७ ॥
एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ।
कुलीनाः शौर्यसंयुक्ताः शक्ता भक्ताः क्रमागताः ॥ ८८ ॥
यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् ।
लज्जया वक्ति नो किञ्चित्तेन राजा सहायवान् ॥ ८९ ॥
यस्मिन्कृत्यं समावेश्य निर्विशंकेन चेतसा ।
आस्यते सेवकः स स्यात्कलत्रमिव चापरम् ॥ ९० ॥
योऽनाहूतः समभ्येति द्वारि तिष्ठति सर्वदा ।
पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ९१ ॥
अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरं च यः ।
यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥ ९२ ॥
ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा ।

यो न चिन्तयते पापं स भृत्योऽर्हो महीभुजाम् ॥ ९३ ॥
न गर्वं कुरुते माने नापमाने च तप्यते ।
स्वाकारं रक्षयेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ९४ ॥
न क्षुधा पीड्यते यस्तु निद्रया न कदाचन ।
न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ९५ ॥
श्रुत्वा सांग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति ।
प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ९६ ॥
सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट् ।
नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥ ९७ ॥
सीमा सङ्कोचमायाति वह्नौ चर्म इवाहितम् ।
स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥ ९८ ॥

तथा शृगालोऽयमिति मन्यमानेन ममोपरि स्वामिना यद्यवज्ञा क्रियते, तदप्ययुक्तम् । उक्तञ्च यतः—

कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वापि गोरोमतः
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् ।
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥९९॥
मूषिका गृहजातापि हन्तव्या स्वापकारिणी ।
भक्ष्यप्रदानैर्मार्जारो हितकृत्प्रार्थ्यते जनैः ॥ १०० ॥
एरण्डभिण्डार्कनलैः प्रभूतैरपि सञ्चितैः ।
दारुकृत्यं यथा नास्ति तथैवाज्ञैः प्रयोजनम् ॥ १०१ ॥
किं भक्तेनासमर्थेन किं शक्तेनापकारिणा ।
भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥ १०२ ॥

पिङ्गलक आह—'भवत्वेवं तावत् । असमर्थः समर्थो वा चिरन्तनस्त्वमस्माकं मन्त्रिपुत्रः । तद्विश्रब्धं ब्रूहि यत्किञ्चिद्वक्तुकामः ।' दमनक आह—'देव ! विज्ञाप्यं किञ्चिदस्ति ।' पिङ्गलक आह—'तन्निवेदयाभिप्रेतम् ।' सोऽब्रवीत्—

'अपि स्वल्पतरं कार्यं यद्भवेत्पृथिवीपतेः ।
तन्न वाच्यं सभामध्ये प्रोवाचेदं बृहस्पतिः ॥ १०३ ॥

[1]तदैकान्तिके मद्विज्ञाप्यमाकर्णयन्तु देवपादाः । यतः—

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णः स्थिरो भवेत् ।
तस्मात्सर्वप्रयत्नेन षट्कर्णं वर्जयेत्सुधीः ॥ १०४ ॥

अथ [2]पिङ्गलकाभिप्रायज्ञा व्याघ्रद्वीपिवृकपुरःसराः सर्वेऽपि तद्वचः समाकर्ण्य संसदि तत्क्षणादेव [3]दूरीभूता । ततश्च दमनक आह—'उदकग्रहणार्थं प्रवृत्तस्य स्वामिनः किमिह निवृत्त्यावस्थानम् ?' पिङ्गलक आह [4]सविलक्षस्मितम्—'किञ्चिदस्ति ।' सोऽब्रवीत्—'देव ! [5]यद्यनाख्येयं तत्तिष्ठतु । उक्तं च—

दारेषु किञ्चित्स्वजनेषु किञ्चिद् गोप्यं वयस्येषु सुतेषु किञ्चित् ।
युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात् ॥१०५॥

तच्छ्रुत्वा पिङ्गलकश्चिन्तयामास—'योग्योऽयं दृश्यते । तत्कथयाम्येतस्याग्रे आत्मनोऽभिप्रायम् । उक्तं च—

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि सौहृदयुक्ते निवेद्य दुःखं सुखी भवति ॥ १०६ ॥

भो दमनक, शृणोषि शब्दं दूरान्महान्तम् ।' सोऽब्रवीत्—'स्वामिन् शृणोमि' ततः किम् । पिङ्गलक आह—'भद्र अहमस्माद्वनाद्गन्तुमिच्छामि ।' दमनक आह—'कस्मात् ।' पिङ्गलक आह—'यतोऽद्यास्मद्वने किमप्यपूर्वं [6]सत्त्वं प्रविष्टं यस्यायं महाशब्दः श्रूयते, तस्य च शब्दानुरूपेण पराक्रमेण भाव्यम्' इति । दमनक आह—'यच्छब्दमात्रादपि भयमुपगतः स्वामी, तदप्ययुक्तम् ।

उक्तञ्च—अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः ।
पैशुन्याद्भिद्यते स्नेहो भिद्यते वाग्भिरातुरः ॥ १०७ ॥

तन्न युक्तं स्वामिनः पूर्वोपार्जितं वनं त्यक्तुं यतो भेरीवेणुवीणामृदङ्गतालपटहशङ्खकाहलादिभेदेन शब्दा अनेकविधा भवन्ति, तन्न केवलाच्छब्दमात्रादपि भेतव्यम् ।

---

१. निर्जनस्थाने । २. ज्ञातान्यत्रगमनसंकेता इत्यर्थः । ३. अन्यत्र गताः । ४. सलज्जास्मितम् । ५. अवाच्यं गोपनीयमिति यावत् । ६. जन्तुः ।

उक्तं च—अत्युत्कटे च रौद्रे च शत्रौ प्राप्ते न हीयते।
धैर्यं यस्य महीनाथो न स याति पराभवम्॥ १०८॥
दर्शितभयेऽपि धातरि धैर्यध्वंसो भवेन्न धीराणाम्।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः॥ १०९॥
तथा च—यस्य न विपदि विषादः सम्पदि हर्षो रणे च भीरुत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्॥ ११०॥
तथा च—शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः॥ १११॥
अपि च—अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति।
जतुजाभरणस्येव रूपेणापि हि तस्य किम्॥ ११२॥

तदेवं ज्ञात्वा स्वामिना धैर्यावष्टम्भः कार्यः। न शब्दमात्राद्-भेतव्यम्।

पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च॥ ११३॥

पिङ्गलक आह—'कथमेतत्।' सोऽब्रवीत्।

## कथा (२)

कश्चिद्गोमायुर्नाम शृगालः क्षुत्क्षामकण्ठ इतस्ततः परिभ्रमन्वने सैन्यद्वयसंग्रामभूमिमपश्यत्। दुन्दुभेः पतितस्य वायुवशाद्व[१]ल्लीशाखाग्रै-[२]र्हन्यमानस्य शब्दमशृणोत्। अथ [३]क्षुभितहृदयश्चिन्तयामास—'अहो, विनष्टोऽस्मि तद्यावन्नास्य प्रोच्चारितशब्दस्य दृष्टिगोचरे गच्छामि, तावदन्यतो व्रजामि। अथवा नैतद्युज्यते सहसैव—

भये वा यदि वा हर्षे सम्प्राप्ते यो विमर्शयेत्।
कृत्यं न कुरुते वेगान्न स सन्तापमाप्नुयात्॥ ११४॥

तत्तावज्जानामि कस्यायं शब्दः। धैर्यमालम्ब्य [४]विमर्शयन्या-वन्मन्दं मन्दं गच्छति तावद् दुन्दुभिमपश्यत्। स च तं परिज्ञाय समीपं गत्वा स्वयमेव कौतुकादताडयत्। भूयश्च हर्षादचिन्तयत्—

१. वल्लीनां लतानां शाखाः प्रतानानि तासामग्रैः। २. ताड्यमानस्य। ३. भयमापन्नः। ४. विचारयन्नित्यर्थः।

अहो! चिरादेतदस्माकं महद्भोजनमापतितं तन्नूनं प्रभूतमांसमेदोऽसृग्भिः परिपूरितं भविष्यति। ततः 'परुषचर्मावगुण्ठितं[1] तत्कथमपि विदार्यैकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्टः। परं चर्मविदारणतो दंष्ट्राभङ्गः[2] समजनि। अथ निराशीभूतस्तद्दारुशेषमवलोक्य श्लोकमेनमपठत्—'पूर्वमेव मया ज्ञातम्' इति। अतो न शब्दमात्राद्भेतव्यम्। पिङ्गलक आह—'भोः, पश्यायं मम सर्वोऽपि परिग्रहो[3] भयव्याकुलितमनाः पलायितुमिच्छति तत्कथमहं धैर्यावष्टम्भं[4] करोमि।' सोऽब्रवीत्–'स्वामिसदृशा एव भवन्ति भृत्याः। उक्तं च—

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च॥ ११५॥

तत्पौरुषावष्टम्भं[5] कृत्वा त्वं तावदत्रैव प्रतिपालय यावदहमेतच्छब्दस्वरूपं ज्ञात्वा आगच्छामि, ततः पश्चाद्यथोचितं कार्यम्' इति। पिङ्गलक आह—'किं तत्र भवान् गन्तुमुत्सहते'[6]। स आह—किं स्वाम्यादेशात्सुभृत्यस्य कृत्याकृत्यमस्ति। उक्तं च—

स्वाम्यादेशात्सुभृत्यस्य न भीः सञ्जायते क्वचित्।
प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम्॥ ११६॥

तथा च—स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च।
मन्यते न स सन्धार्यो भूभुजा भूतिमिच्छता'॥ ११७॥

पिङ्गलक आह—'भद्र! यद्येवं तद्गच्छ, शिवास्ते पन्थानः सन्तु' इति। दमनकोऽपि तं पणम्य सञ्जीवकशब्दानुसारी प्रतस्थे।

अथ दमनके गते भयव्याकुलमनाः पिङ्गलकश्चिन्तयामास। अहो न शोभनं कृतं मया यत्तस्य विश्वासं गत्वात्माभिप्रायो निवेदितः। कदाचिद्दमनकोऽयमुभयवेतनो[7] भूत्वा ममोपरि दुष्टबुद्धिः स्याद् भ्रष्टाधिकारत्वात्। उक्तञ्च—

ये भवन्ति महीपस्य संमानितविमानिताः।
यतन्ते तस्य नाशाय कुलीना अपि सर्वदा॥ ११८॥

---

१. कर्कशचर्माच्छादितम्। २. दशनभङ्गः। ३. अनुचरवर्ग इत्यर्थः। ४. धैर्यं धारयामि। ५. पुरुषार्थमवलम्ब्येत्यर्थः। ६. गन्तुमिच्छतीत्यर्थः। ७. प्रभो शत्रोश्च वेतनग्राही।

तत्तावदस्य [1]चिकीर्षितं वेत्तुं स्थानान्तरं गत्वा प्रतिपालयामि कदाचिद्दमनकस्तमादाय मां व्यापादयितुमिच्छति। उक्तं च—

न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि।
विश्वस्तास्त्वेव बध्यन्ते बलवन्तोऽपि दुर्बलैः॥ ११९॥
बृहस्पतेरपि प्राज्ञो न विश्वासं व्रजेन्नरः।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च॥ १२०॥
शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः।
राज्यलोभाद्यतो वृत्रः शक्रेण शपथैर्हतः॥ १२१॥
न विश्वासं विना शत्रुर्देवानामपि सिध्यति।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः॥ १२२॥

एवं [2]संप्रधार्य स्थानान्तरं गत्वा दमनकमार्गमवलोकयन् [3]एकाकी तस्थौ। दमनकोऽपि संजीवकसकाशं गत्वा वृषभोऽयमिति परिज्ञाय हृष्टमना अचिन्तयत्—अहो शोभनमापतितम्[4]। अनेनैतस्य संधिविग्रहद्वारेण मम पिङ्गलको वश्यो भविष्यतीति। उक्तं च—

न कौलीनान्न सौहार्दान्नृपो वाक्ये प्रवर्तते।
मन्त्रिणां यावदभ्येति व्यसनं शोकमेव च॥ १२३॥
सदैवापद्गतो राजा भोग्यो भवति मन्त्रिणाम्।
अत एव हि वाञ्छन्ति मन्त्रिणः सापदं नृपम्॥ १२४॥
यथा नेच्छति नीरोगः कदाचित्सुचिकित्सकम्।
तथापद्रहितो राजा सचिवं नाभिवाञ्छति॥ १२५॥

एवं विचिन्तयन्पिङ्गलकाभिमुखः प्रतस्थे। पिङ्गलकोऽपि तमायान्तं प्रेक्ष्य [5]स्वाकारं रक्षन्यथापूर्वमवस्थितः। दमनकोऽपि पिङ्गलकसकाशं गत्वा प्रणम्योपविष्टः। पिङ्गलक आह—'किं दृष्टं भवता तत्सत्त्वम्?' दमनक आह—'दृष्टं [6]स्वामिप्रसादात्।' पिङ्गलक आह—'अपि सत्यम्?' दमनक आह—'किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते।' उक्तं च—

---

१. अभिप्रायमिति यावत्। २. विचार्येत्यर्थः। ३. तिरोहितः सन् स्थित इति भावः। ४. सञ्जातम्। ५. निर्भीकतां प्रकटयन्नित्यर्थः ६. भवदनुग्रहादिति भावः।

अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् ।
देवानां च विनश्येत स द्रुतं सुमहानपि ॥ १२६ ॥

तथा च—सर्वदेवमयो राजा मनुना संप्रकीर्तितः ।
तस्मात्तं देववत्पश्येन्न व्यलीकेन कर्हिचित् ॥ १२७ ॥

सर्वदेवमयस्यापि विशेषो नृपतेरयम् ।
शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ १२८ ॥

पिङ्गलक आह—सत्यं दृष्टं भविष्यति भवता, न दीनोपरि महान्तः कुप्यन्तीति न त्वं तेन [१]निपातितः । यतः—

तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वतः ।
स्वभाव एवोन्नतचेतसामयं महान्महत्स्वेव करोति विक्रमम् ॥१२९॥

अपि च—

गण्डस्थलेषु मदवारिषु बद्धराग-
मत्तभ्रमद्भ्रमरपादतलाहतोऽपि ।
कोपं न गच्छति नितान्तबलोऽपि नाग-
स्तुल्ये बले तु बलवान्परिकोपमेति ॥ १३० ॥

दमनक आह—अस्त्वेवं स महात्मा वयं [२]कृपणाः, तथापि स्वामी यदि कथयति ततो [३]भृत्यत्वे नियोजयामि । पिङ्गलक आह [४]सोच्छ्वासम्—'किं भवाञ्छक्नोत्येवं कर्तुम् ?' दमनक आह—किमसाध्यं बुद्धेरस्ति । उक्तं च—

न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः ।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ १३१ ॥

पिङ्गलक आह—यद्येवं [५]तर्ह्यमात्यपदेऽध्यारोपितस्त्वम् । अद्यप्रभृति प्रसादनिग्रहादिकं त्वयैव कार्यमिति निश्चयः ।

अथ दमनकः सत्वरं गत्वा [६]साक्षेपं तमिदमाह—'एह्येहीतो दुष्टवृषभ ! स्वामी पिङ्गलकस्त्वाम् [७]आकारयति किं निःशङ्को भूत्वा मुहुर्मुहुर्नदसि वृथा इति । तच्छ्रुत्वा संजीवकोऽब्रवीत्—'भद्र ! कोऽयं

---

१. मारितः । २. दीना दुर्बला इति यावत् । ३. सेवकपदे स्थापयामीत्यर्थः । ४. सनिःश्वासम् । ५. मन्त्रिपदे नियुक्तः । ६. अपमानसहितं यथा तथा । ७. आह्वयति ।

पिङ्गलकः ?' दमनक आह—किं स्वामिनं पिङ्गलकमपि न जानासि, तत्क्षणं प्रतिपालय, फलेनैव ज्ञास्यसि, नन्वयं सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा सिंहस्तिष्ठति।' तच्छ्रुत्वा 'गतायुषमिवात्मानं मन्यमानः संजीवकः परं विषादमगमत्। आह च—'भद्र ! भवान् 'साधु-समाचारो वचनपटुश्च दृश्यते, तद्यदि मामवश्यं तत्र नयति तदभय-प्रदानेन स्वामिनः सकाशात्प्रसादः कारयितव्यः।' दमनक आह—'भोः सत्यमभिहितं भवता, नीतिरेषा, यतः—

> पर्यन्तो लभ्यते भूमेः समुद्रस्य गिरेरपि।
> न कथञ्चिन्महीपस्य चित्तान्तः केनचित्क्वचित् ॥ १३२ ॥

तत्त्वमत्रैव तिष्ठ यावदहं तं समये दृष्ट्वा ततः पश्चात्त्वामानयामि' इति। तथानुष्ठिते दमनकः पिङ्गलकसकाशं गत्वेदमाह—'स्वामिन् ! न तत्प्राकृतं सत्त्वं, स हि भगवतो महेश्वरस्य वाहनभूतो वृषभ' इति। मया पृष्ट इदमूचे—'महेश्वरेण परितुष्टेन 'कालिन्दीपरिसरे शष्पाग्राणि भक्षयितुं समादिष्टः, किं वहुना मम प्रदत्तं भगवता क्रीडार्थं वनमिदम्।' पिङ्गलक आह सभयम्—सत्यं ज्ञातं मया अधुना, न 'देवताप्रसादं विना शष्पभोजिनो 'व्यालाकीर्णे एवंविधे वने निःशङ्कं नदन्तो भ्रमन्ति, ततस्त्वया किमभिहितम् ?' दमनक आह—'स्वामिन् ! एतदभिहितं मया यदेतद्वनं चण्डिकावाहनभूतस्य मत्स्वामिनः पिङ्गलकनाम्नः सिंहस्य 'विषयीभूतम्, तद्भवान् 'अभ्यागतः प्रियोऽतिथिः। तत्तस्य सकाशं गत्वा भ्रातृस्नेहेनैकत्र भक्षणपानविहरणक्रियाभिरेकस्थानाश्रयेण कालो नेय' इति, ततस्तेनापि सर्वमेतत्प्रतिपन्नम्' उक्तं च सहर्षम्—'स्वामिनः सकाशादभयदक्षिणा दापयितव्या' इति तदत्र स्वामी प्रमाणम्। तच्छ्रुत्वा पिङ्गलक आह—'साधु सुमते ! साधु 'मन्त्रिश्रोत्रिय ! साधु मम हृदयेन सह संमन्त्र्य भवतेदमभिहितं, तद्दत्ता मया तस्याभयदक्षिणा, परं सोऽपि मदर्थेऽभयदक्षिणां याचयित्वा द्रुततरमानीयताम्' इति। अथ साधु चेदमुच्यते—

---

१. निष्प्राणं मृतमिवेत्यर्थः। २. सज्जन इत्यर्थः। ३. यमुनातटे। ४. देवकृपाम्। ५. सिंहव्याघ्रादिपूर्णे। ६. अधिकारान्तर्गतम्। ७. आगतः। ८. अङ्गीकृतम्। ९. चतुरमन्त्रिन्।

अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः ।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ १३३ ॥

तथा च—मन्त्रिणां भिन्नसन्धाने भिषजां सान्निपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ १३४ ॥

दमनकोऽपि तं प्रणम्य संजीवकसकाशं प्रस्थितः सहर्षमचिन्तयत्—अहो प्रसादसम्मुखो नः स्वामी वचनवशगश्च संवृत्तः । तन्नास्ति धन्यतरो मम । उक्तं च—

अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् ।
अमृतं राजसम्मानममृतं क्षीरभोजनम् ॥ १३५ ॥

अथ संजीवकसकाशमासाद्य [1]सप्रश्रयमुवाच—भो मित्र ! प्रार्थितोऽसौ मया भवदर्थे स्वाम्यभयप्रदानं तद् [2]विश्रब्धं गम्यतामिति । परं त्वया राजप्रसादमासाद्य मया सह [3]समयधर्मेण वर्तितव्यं, न गर्वमासाद्य स्वप्रभुतया विचरणीयम् । अहमपि तव सङ्केतेन सर्वां [4]राज्यधुरममात्यपदवीमाश्रित्योद्धरिष्यामि । एवं कृते द्वयोरप्यावयो राज्यलक्ष्मीर्भोग्या भविष्यति ।

आखेटकस्य धर्मेण विभवाः स्युर्वशे नृणाम् ।
नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव ॥ १३६ ॥

संजीवक आह—भद्र ! एवमेवैतत् । यद्भवताभिहितं तदेव मया कर्तव्यम् इति । एवमभिहिते दमनकस्तमादाय पिङ्गलकसकाशमगमत् । आह च—देव ! एष मया आनीतः स संजीवकः । अधुना देवः प्रमाणम् । संजीवकोऽपि तं सादरं प्रणम्याग्रतः सविनयं स्थितः । पिङ्गलकोऽपि तस्य [5]पीनायतककुद्मतो [6]नखकुलिशालङ्कृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच—[7]अपि शिवं भवतः ? कुतस्त्वमस्मिन्वने विजने समायातोऽसि ? तेनाप्यात्मवृत्तान्तः कथितः । यथा वर्धमानेन सह वियोगः संजातस्तथा सर्वं निवेदितम् । तच्छ्रुत्वा पिङ्गलकः

---

१. सस्नेहम् । २. निर्भयं यथा तथा । ३. नियमक्रमेण । ४. राज्यसञ्चालनहेतुभूतं मन्त्रिपदम् । ५. पीना परिपुष्टा आयता सुदीर्घा च ककुद् अस्य अस्ति स तस्य । ६. तीक्ष्णनखयुक्तम् । ७. सकुशलोऽसि किमिति भावः ।

सादरतरं तमुवाच—'वयस्य ! न भेतव्यं [१]मद्भुजपञ्जरपरिरक्षितेन यथेच्छं त्वयाधुना वर्तितव्यम्। अन्यच्च नित्यं मत्समीपवर्तिना भाव्यम्। यतः कारणाद् [२]बह्वपायं [३]रौद्रसत्त्वनिषेवितं वनं गुरूणामपि सत्त्वानामसेव्यम्, कुतः शष्पभोजिनाम्।' एवमुक्त्वा सकलमृगपरिवृतो यमुनाकच्छमवतीर्योदकग्रहणं कृत्वा स्वेच्छया तदेव वनं प्रविष्टः। ततश्च करटकदमनकनिक्षिप्तराज्यभारः संजीवकेन सह सुभाषितगोष्ठीमनुभवन्नास्ते। अथवा साध्विदमुच्यते—

यदृच्छयाप्युपनतं सकृत्सज्जनसङ्गतम्।
भवत्यजरमत्यन्तं नाभ्यासक्रममीक्षते ॥ १३७ ॥

सञ्जीवकेनाप्यनेकशास्त्रावगाहनादुत्पन्नबुद्धिप्रागल्भ्येन स्तोकैरेवाऽहोभि[४]र्मूढमतिः पिङ्गलको धीमांस्तथा कृतो यथारण्यधर्माद्वियोज्य ग्राम्यधर्मेषु नियोजितः। किं बहुना प्रत्यहं पिङ्गलकसंजीवकावेव केवलं रहसि मन्त्रयतः। शेषः सर्वोऽपि मृगजनो दूरीभूतस्तिष्ठति। करटकदमनकावपि प्रवेशं न लभेते। अन्यच्च सिंहपराक्रमाभावात्सर्वोऽपि मृगजनस्तौ च शृगालौ [५]क्षुधाव्याधिबाधिता एकां दिशमाश्रित्य स्थिताः। उक्तं च—

फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम्।
सन्त्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ १३८ ॥

तथा च—अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः।
वृत्तिभङ्गान्महीपालं त्यजन्त्येव हि सेवकाः ॥ १३९ ॥

अन्यच्च—कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः।
कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ १४० ॥

तथा न केवलं सेवका इत्थम्भूता यावत्समस्तमप्येतज्जगत् परस्परं भक्षणार्थं [६]सामादिभिरुपायैस्तिष्ठति। तद्यथा—

देशानामुपरि क्ष्माभृदातुराणां चिकित्सकाः।
वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥ १४१ ॥

---

१. मम बाहुबलसुरक्षितेनेत्यर्थः। २. विपद्बहुलम्। ३. हिंसकप्राणिव्याप्तम्। ४. निर्बुद्धिः। ५. बुभुक्षापीडिता इत्यर्थः। ६. सामदानभेददण्डैरित्यर्थः।

समादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम्।
उपजीवन्ति शक्त्या हि जलजा जलदानिव ॥ १४२ ॥

अथवा साध्विदमुच्यते—

सर्पाणां च खलानां च परद्रव्यापहारिणाम्।
अभिप्राया न सिद्ध्यन्ति तेनेदं वर्तते जगत् ॥ १४३ ॥

अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्तः फणी
तं च क्रौञ्चरिपोः शिखी गिरिसुतासिंहोऽपि नागाननम्।
इत्थं यत्र परिग्रहस्य घटना शम्भोरपि स्याद् गृहे
तत्रान्यस्य कथं न भावि जगतो यस्मात्स्वरूपं हि तत् ॥ १४४ ॥

ततः स्वामिप्रसादरहितौ क्षुत्क्षामकण्ठौ परस्परं करटकदमनकौ मन्त्रयेते। तत्र दमनको ब्रूते—आर्य करटक! आवां तावदप्रधानतां गतौ। एष पिङ्गलकः सञ्जीवकानुरक्तः स्वव्यापारपराङ्मुखः सञ्जातः। सर्वोऽपि परिजनो गतः। तत्किं क्रियते? करटक आह—यद्यपि त्वदीयवचनं न करोति तथापि स्वामी [1]स्वदोषनाशाय वाच्यः।

उक्तं च—अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ १४५ ॥

तथा च—मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः।
उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः ॥ १४६ ॥

तत्त्वयैव शष्पभोजी स्वामिनः सकाशमानीतः। तत् [2]स्वहस्तेनाङ्गाराः कर्षिताः। दमनक आह—सत्यमेतत्। ममायं दोषो न स्वामिनः।

करटक आह—एवंविधे [3]व्यतिकरे किं कर्तव्यमावयोः? दमनकोऽब्रवीत्—एवंविधेऽपि समये मम [4]बुद्धिस्फुरणं भविष्यति येन संजीवकं प्रभोर्विश्लेषयिष्यामि[5]। उक्तं च यतः—

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता।
बुद्धिर्बुद्धिमतः सृष्टा हन्ति राष्ट्रं सनायकम् ॥ १४७ ॥

---

१. निजनिन्दारूपदोषपरिहारायेत्यर्थः २. स्वयमेव विपदानीतेति भावः। ३. दशायाम्। ४. बुद्धिविकास इत्यर्थः। ५. वियोजयिष्यामि।

तदहं [1]मायाप्रपञ्चेन गुप्तमाश्रित्य तं [2]स्फोटयिष्यामि। करटक आह—भद्र! यदि कथमपि तत्र [3]मायाप्रवेशं पिङ्गलको ज्ञास्यति संजीवको वा, तदा नूनं [4]विघात एव। सोऽब्रवीत्—तात! मैवं वद, [5]गूढबुद्धिभिरापत्काले [6]विधुरेऽपि दैवे बुद्धिः प्रयोक्तव्या नोद्यमस्त्याज्यः। कदाचिद् [7]घुणाक्षरन्यायेन बुद्धेः साम्राज्यं भवति। उक्तञ्च—

त्याज्यं न धैर्यं विधुरेऽपि दैवे धैर्यात्कदाचित्स्थितिमाप्नुयात् सः।
जाते समुद्रेऽपि हि पोतभङ्गे सांयात्रिको वाञ्छति कर्म एव ॥ १४८ ॥

तथा च—उद्योगिनं सततमत्र समेति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ १४९ ॥

तदेवं ज्ञात्वा [8]सुगूढबुद्धिप्रभावेण यथा तौ द्वावपि न ज्ञास्यतः, तथा मिथो वियोजयिष्यामि।

तच्छ्रुत्वा करटक आह—भद्र! अस्त्येवं परं तथापि महन्मे भयम्, यतो बुद्धिमान्संजीवको रौद्रश्च सिंहः। यद्यपि ते बुद्धिप्रागल्भ्यं तथापि त्वं पिङ्गलकात्तं वियोजयितुमसमर्थ एव। दमनक आह—भ्रातः! असमर्थोऽपि समर्थ एव। उक्तञ्च—

उपायेन हि यत्कुर्यात्तन्न शक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥ १५० ॥

करटक आह—कथमेतत्। सोऽब्रवीत्—

## कथा ( ३ )

अस्ति कस्मिंश्चित्प्रदेशे महान् [9]न्यग्रोधपादपः। तत्र वायसदाम्पती

---

१. कपटचातुरीविस्तारेण। २. वियोजयिष्यामि। ३. कपटव्यापारम्। ४. महाननर्थ एव इति भावः। ५. दीर्घदर्शिभिः। ६. प्रतिकूलतां गतेऽपीत्यर्थः ७. घुणो हि नाम दारुतक्षकः कीटभेदः स च यदा काष्ठं कृन्तति तदा काष्ठे कृन्तनजातानि विवराणि दैवाद् अक्षरतुल्यानि प्रतीयन्ते मन्दाश्च खलु घुणेनैव कृतान्यक्षराणीति विश्वसन्ति, स एष घुणाक्षरन्यायः। ८. नीतिचातुर्येणेति भावः। ९. वटतरुः।

प्रतिवसतः स्म। अथ तयोः प्रसवकाले वृक्षविवरान्निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ [1]निर्वेदादन्यवृक्षमूलनिवासिनं प्रियसुहृदं शृगालं गत्वोचतुः—भद्र! किमेवंविधे संजात आवयोः कर्तव्यं भवति? एवं तावद् दुष्टात्मा कृष्णसर्पो वृक्षविवरान्निर्गत्यावयोर्बालकान्भक्षयति, तत्कथ्यतां [2]तद्रक्षार्थं कश्चिदुपायः।

उक्तं च—सर्पयुक्ते गृहे वासो मृत्युरेव न संशयः।
यद्ग्रामान्ते वसेत्सर्पस्तस्य स्यात्प्राणसंशयः॥ १५१॥

अस्माकमपि तत्र स्थितानां प्रतिदिनं [3]प्राणसंशयः। स आह—नात्र विषये स्वल्पोऽपि विषादः कार्यः। नूनं स [4]लुब्धो नोपायमन्तरेण वध्यः स्यात्।

उपायेन जयो यादृग्रिपोस्तादृङ् न हेतिभिः।
उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते॥ १५२॥

तथा च—भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्याद् बकः कश्चिन्मृतः कर्कटकग्रहात्॥ १५३॥

तावूचतुः—कथमेतत्? सोऽब्रवीत्—

## कथा (४)

अस्ति कस्मिंश्चिद्वनप्रदेशे नानाजलचरसनाथं महत्सरः। तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान्व्यापादयितुमसमर्थः। ततश्च क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो [5]मुक्ताफलप्रकरसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन्रुरोद। एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे—माम! किमद्य त्वया न [6]आहारवृत्तिरनुष्ठीयते केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते? स आह—वत्स! सत्यमुपलक्षितं भवता, मया हि [7]मत्स्यादनं प्रति परमवैराग्यतया साम्प्रतं [8]प्रायोपवेशनं कृतम्, तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि। कुलीरकस्तच्छ्रुत्वा प्राह—माम! किं तद्वैराग्यकारणम्? स प्राह—वत्स!

---

१. अपत्यविनाशजन्यदुःखादित्यर्थः। २. अपत्यरक्षार्थमित्यर्थः। ३. मृत्युसम्भावना। ४. दुष्ट इति भावः। ५. अजस्रं निपतद्भिरिति भावः। ६. भोजनम्। ७. मत्स्यभक्षणं प्रति। ८. अनशनव्रतमित्यर्थः।

अहमस्मिन्सरसि जातो वृद्धिं गतश्च, तन्मयैतच्छ्रुतं यद् [1]द्वादशवार्षिक्य-नावृष्टिः[2] सम्पद्यते [3]लग्ना। कुलीरक आह—कस्मात्तच्छ्रुतम्? बक आह—दैवज्ञमुखात्। एषः शनैश्चरो हि रोहिणीशकटं भित्त्वा भौमं शुक्रं च प्रयास्यति। उक्तं च वराहमिहिरेण—

यदि भिन्ते सूर्यसुतो रोहिण्याः शकटमिह लोके।
द्वादशवर्षाणि तदा न हि वर्षति वासवो भूमौ॥ १५४॥

तथा च—प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा।
भस्मास्थिशकलकीर्णा कापालिकमिव व्रतं धत्ते॥ १५५॥

तथा च—रोहिणीशकटमर्कनन्दनश्चेद्भिनत्ति रुधिरोऽथवा शशी।
किं वदामि तदनिष्टसागरे सर्वलोकमुपयाति सङ्क्षयः॥ १५६॥
रोहिणीशकटमध्यसंस्थिते चन्द्रमस्यशरणीकृता जनाः।
क्वापि यान्ति शिशुपाचिताशनाः सूर्यतप्तभिदुराम्बुपायिनः॥१५७॥

तदेतत्सरः [4]स्वल्पतोयं वर्तते शीघ्रं शोषं यास्यति। अस्मिञ्शुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्च ते सर्वे तोयाभावान्नाशं यास्यन्ति। तत्तेषां वियोगं द्रष्टुमहमसमर्थः। तेनैतत्प्रायोपवेशनं कृतम्। सांप्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनै[5]र्नीयन्ते। केचिच्च [6]मकरशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति। अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति, तेनाहं विशेषाद्रोदिमि यद् [7]बीजशेषमात्रमप्यत्र नोद्धरिष्यति। ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास। अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयस्तमभ्युपेत्य पप्रच्छुः—माम! अस्ति कश्चिदुपाय येनास्माकं रक्षा भवति? बक आह—अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः [8]पद्मिनीखण्डमण्डितं यच्चतुर्विंशत्यापि वर्षाणामनावृष्ट्या न शोषमेष्यति, तद्यदि मम

---

१. द्वादशवर्षव्याप्या। २. वर्षाप्रतिबन्धः। ३. क्रमेण प्राप्ता। ४. अल्पजलमित्यर्थः। ५. प्राप्यन्ते। ६. मकराद्या महान्तो जलचरा इति भावः। ७. जलचरवंशस्य समूलनाशो भविष्यतीति तात्पर्यम्। ८. कमलिनीनां समूहैरलङ्कृतम्।

पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि। अथ ते तत्र विश्वास-मापन्नाः तात! मातुल! भ्रातः! इति ब्रुवाणाः 'अहं पूर्वमहं पूर्वम्' इति समन्तात्परितस्थुः। सोऽपि दुष्टाशयः क्रमेण तान्पृष्ठ आरोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्याम् [1]आक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां [2]मिथ्यावार्तासंदेशकैर्मनांसि रञ्जयन्नित्यामिषाहारवृत्तिमकरोत्। अन्यस्मिन्दिने च कुलीरकेणोक्तः—माम! मया सह ते प्रथमः [3]स्नेहसंभाषः संजातः। तत्किं मां परित्यज्यान्यान्नयसि? तस्मादद्य मे प्राणत्राणं कुरु। तदाकर्ण्य सोऽपि दुष्टाशयश्चिन्तितवान्—'निर्विण्णोऽहं मत्स्यमांसादनेन, तदद्यैनं कुलीरकं व्यञ्जनस्थाने करोमि' इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः। कुलीरकोऽपि दूरादेवास्थिपर्वतं [4]शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्—माम! कियद्दूरे स जलाशयः? मदीयभारेणातिश्रान्तस्त्वं, तत्कथय। सोऽपि मन्दधीर्जलचरोऽयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह—कुलीरक! कुतोऽन्यो जलाशयः? मम प्राणयात्रेयं, तस्मात्स्मर्यतामात्मनोऽभीष्टदेवता। त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि। इत्युक्तवति तस्मिन् तेन स्ववदनदंशद्वयेन [5]मृणालनालधवलायां मृदुग्रीवायां स गृहीतो मृतश्च। अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद। ततः सर्वैरेव जलचरैः पृष्टः—भोः कुलीरक! किं निवृत्तस्त्वम्? स मातुलोऽपि नायातः। तत्किं चिरयति। वयं सर्वे सोत्सुकाः [6]कृतक्षणास्तिष्ठामः। एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच—मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः। तन्मया आयुःशेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता। तदलं [7]संभ्रमेण। अधुना सर्वजलचराणां क्षेमं भविष्यति। अतोऽहं ब्रवीमि—'भक्षयित्वा

---

१. निपात्येत्यर्थः। २. असत्यालापैरिति भावः। ३. प्रेमालापः। ४. शिलास्थितमित्यर्थः। ५. अत्यन्तशुभ्रायाम्। ६. प्रतीक्षमाणाः। ७. भीत्या।

बहून्मत्स्यान्' इति। वायस आह—भद्र! तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति? शृगाल आह—गच्छतु भवान्किञ्चिन्नगरं [1]राजाधिष्ठानम्। तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिपतु येन सर्पस्तद्ग्रहणेन वध्यते।

अथ तत्क्षणात्काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ। ततश्च काकी किञ्चित्सरः प्राप्य यावत्पश्यति, तावत्तन्मध्ये कस्यचिद्राज्ञो-[2]ऽन्तःपुरं जलासन्नं न्यस्तकनकसूत्रं [3]मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते। अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे। ततश्च कञ्चुकिनो वर्षधराश्च तन्नीयमानमुपलक्ष्य [4]गृहीतलगुडाः सत्वरमनुययुः। काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता। अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति, तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति, ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः। वायसदम्पती अपि ततः परं सुखेन वसतः। अतोऽहं ब्रवीमि—'उपायेन हि यत्कुर्यात्' इति। तन्न किंचिदपि बुद्धिमतामसाध्यमस्ति।

उक्तञ्च—यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
वने सिंहो मदोन्मत्तः शशकेन निपातितः॥ १५८॥

करटक आह—कथमेतत्? स आह—

## कथा (५)

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म। अथासौ [5]वीर्यातिरेकान्नित्यमेवानेकान्मृगशशकादीन् [6]व्यापादयन्नोपरराम। अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः—स्वामिन्! किमनेन सकलमृगवधेन नित्यमेव यतस्तवैकेनापि मृगेण तृप्तिर्भवति तत्क्रियतामस्माभिः सह [7]समयधर्मः। अद्यप्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं

१. राजधानीमित्यर्थः। २. अन्तःपुरस्थो जन इति भावः। ३. त्यक्तमुक्ताजटितवसनालङ्कारम्। ४. लगुडधारिणः। ५. बलदर्पादित्यर्थः। ६. हिंसन्। ७. प्रतिज्ञेति यावत्।

समेष्यति । एवं कृते तावत् [1]प्राणयात्रा क्लेशं विनापि भविष्यति, अस्माकं च पुनः [2]सर्वोच्छेदनं न स्यात् । तदेष राजधर्मोऽनुष्ठीयताम्
उक्तञ्च—शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् ।
रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ १५९ ॥
विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च ।
प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ १६० ॥
प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् ।
पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ १६१ ॥
गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः ।
पालनात्पोषणाद् ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥ १६२ ॥
अजामिव प्रजां मोहाद्यो हन्यात्पृथिवीपतिः ।
तस्यैका जायते तृप्तिर्न द्वितीया कथञ्चन ॥ १६३ ॥
फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ १६४ ॥
नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
आन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ १६५ ॥
यथा गौर्दुह्यते काले पाल्यते च तथा प्रजा ।
सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥ १६६ ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ १६७ ॥
हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किंचित् प्रजाभ्यः स्यान्महीपतेः ॥ १६८ ॥
लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः ।
लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥ १६९ ॥

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह—अहो सत्यमभिहितं भवद्भिः, परं यदि ममोपविष्टस्यात्र नित्यमेव नैकः [3]श्वापदः समागमिष्यति तन्नूनं सर्वानपि भक्षयिष्यामि । अथ तथैव प्रतिज्ञाय

१. उदरपूर्त्तिरिति भावः । २. वंशनाश इत्यर्थः । ३. वन्यजन्तुः ।

[१]निर्वृतिभाजस्तत्रैव वने निर्भयाः पर्यटन्ति। एकश्च प्रतिदिनं [२]क्रमेण याति। वृद्धो वा, वैराग्ययुक्तो वा, शोकग्रस्तो वा, पुत्रकलत्रनाशभीतो वा, तेषां मध्यात्तस्य भोजनार्थं मध्याह्नसमय उपतिष्ठते।

अथ कदाचिज्जातिक्रमाच्छशकस्य [३]अवसरः समायातः। स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन् [४]वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता कूपः संदृष्टः। यावत्कूपोपरि याति तावत्कूपमध्य आत्मनः प्रतिबिम्बं ददर्श, दृष्ट्वा च तेन हृदये चिन्तितं यद्भव्य उपायोऽस्ति, अहं भासुरकं प्रकोप्य स्वबुद्ध्यास्मिन्कूपे पातयिष्यामि। अथासौ [५]दिनशेषे भासुरकसमीपं प्राप्तः। सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः [६]सृक्कणी परिलेलिहन् व्यचिन्तयत्—अहो प्रातराहाराय [७]निःसत्त्वं वनं मया कर्तव्यम्। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः। अथ तं [८]प्रज्वलितात्मा भासुरको भर्त्सयन्नाह—रे शशकाधम! एकतस्तावत्त्वं लघुः, प्राप्तोऽपरतो वेलातिक्रमेण, तदस्मादपराधात्त्वां निपात्य प्रातः सकलान्यपि मृगकुलान्युच्छेदयिष्यामि। अथ शशकः सविनयं प्रोवाच—'स्वामिन्! नापराधो मम, न च सत्त्वानाम्। तच्छ्रूयतां कारणम्'। सिंह आह—सत्वरं निवेदय यावन्मम दंष्ट्रान्तर्गतो न भवसीति। शशक आह—स्वामिन्! समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य [९]प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः। ततश्चाहमागच्छन्नन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्याभिहितः—रे क्व प्रस्थिता यूयम्? अभीष्टदेवतां स्मरत। ततो मयाभिहितम्—'वयं स्वामिनो भासुरकसिंहस्य सकाश आहारार्थं समयधर्मेण गच्छामः। ततस्तेनाभिहितम्—'यद्येवं तर्हि मदीयमेतद्वनम्। मया सह समयधर्मेण समस्तैरपि श्वापदै-

१. सानन्दा इत्यर्थः। २. नियमेनेत्यर्थः। ३. समयः कर्म इत्यर्थः। ४. विलम्बमिति भावः। ५. सायङ्काले। ६. ओष्ठप्रान्तौ पुनः पुनरपि लिहन्। ७. प्राणिशून्यम्। ८. अत्यन्तक्रुद्धः। ९. भवतः समीपे आगमनक्रमं वारमित्यर्थः।

र्वर्तितव्यं। चौररूपी स भासुरकः। अथ यदि सोऽत्र राजा ततो [1]विश्वास-स्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ येन यः कश्चिदावयोर्मध्यात्पराक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यति' इति। ततोऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः। एतद्वेलाव्यतिक्रमकारणम्। तदत्र स्वामी प्रमाणम्।' तच्छ्रुत्वा भासुरक आह—'भद्र! यद्येवं तत्सत्वरं दर्शय मे तं चौरसिंहं येनाहं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि।

उक्तञ्च—भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम्।
नास्त्येकमपि यद्येषां न तं कुर्यात्कथञ्चन॥ १७०॥
यत्र न स्यात्फलं भूरि यत्र च स्यात्पराभवः।
न तत्र मतिमान्युद्धं समुत्पाद्य समाचरेत्॥ १७१॥

शशक आह—स्वामिन्! सत्यमिदम्। [2]स्वभूमिहेतोः [3]परिभवाच्च युध्यन्ते क्षत्रियाः। परं स दुर्गाश्रयः। दुर्गान्निष्क्रम्य वयं तेन [4]विष्कम्भिताः। ततो दुर्गस्थो दुःसाध्यो भवति रिपुः।

उक्तञ्च—न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
यत्कृत्यं साध्यते राज्ञां दुर्गेणैकेन सिद्ध्यति॥ १७२॥
शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः।
तस्माद् दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः॥ १७३॥
पुरा गुरोः समादेशाद्धिरण्यकशिपोर्भयात्।
शक्रेण विहितं दुर्गं प्रभावाद्विश्वकर्मणः॥ १७४॥
तेनापि च वरो दत्तो यस्य दुर्गं स भूपतिः।
विजयी स्यात्ततो भूमौ दुर्गाणि स्युः सहस्रशः॥ १७५॥
दंष्ट्राविरहितो नागो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः॥ १७६॥

तच्छ्रुत्वा भासुरक आह—भद्र! दुर्गस्थमपि दर्शय तं चौरसिंहं येन व्यापादयामि। उक्तञ्च—
जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत्।

---

१. विश्वासार्थमित्यर्थः। २. स्वदेशरक्षाकारणादिति भावः। ३. अरिभिः कृतादपमानात्। ४. अवरुद्धाः।

महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ १७७ ॥

तथा च—उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ १७८ ॥

अपि च—उपेक्षितः क्षीणबलोऽपि शत्रुः प्रमाददोषात्पुरुषैर्मदान्धैः ।
साध्योऽपि भूत्वा प्रथमं ततोऽसावसाध्यतां व्याधिरिव प्रयाति ॥

तथा च—आत्मनः शक्तिमुद्वीक्ष्य मानोत्साहञ्च यो व्रजेत् ।
बहून् हन्ति स एकोऽपि क्षत्रियान्भार्गवो यथा ॥ १८० ॥

शशक आह—अस्त्येतत् तथापि बलवान् स मया दृष्टः । तन्न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम् । उक्तञ्च—

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ १८१ ॥

यो बलात्प्रोन्नतं याति निहन्तुं सबलोऽप्यरिम् ।
विमदः स निवर्तेत शीर्णदन्तो गजो यथा ॥ १८२ ॥

भासुरक आह—'भोः किं तवानेन व्यापारेण ? दर्शय मे तं दुर्गस्थमपि । अथ शशक आह—यद्येवं तर्ह्यागच्छतु स्वामी ।' एवमुक्त्वाग्रे [1]व्यवस्थितः । ततश्च तेनागच्छता यः कूपो दृष्टोऽभूत्तमेव कूपमासाद्य भासुरकमाह—स्वामिन् ! कस्ते प्रतापं सोढुं समर्थः । त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गम् । तदागच्छ येन दर्शयामीति । भासुरक आह—'दर्शय मे दुर्गम्' तदनु दर्शितस्तेन कूपः । ततः सोऽपि मूर्खः सिंहः कूपमध्य आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच । ततः [2]प्रतिशब्देन कूपमध्याद् द्विगुणतरो नादः समुत्थितः । अथ तेन तं शत्रुं मत्वात्मानं तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः । शशकोऽपि हृष्टमनाः सर्वमृगानानन्द्य तैः सह [3]प्रशस्यमानो यथासुखं तत्र वने निवसति स्म । अतोऽहं ब्रवीमि—'यस्य बुद्धिर्बलं तस्य' इति ॥ तद्यदि भवान्कथयति तत्तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेण [4]मैत्रिभेदं करोमि । करटक आह—भद्र ! यद्येवं तर्हि गच्छ, शिवास्ते पन्थानः सन्तु, यथाभिप्रेतमनुष्ठीयताम् ।

---

१. प्रचलितः । २. प्रतिध्वनिना । ३. स्तूयमानः । ४. मित्रताविनाशनम् ।

अथ दमनकः सञ्जीवकवियुक्तं पिङ्गलकमवलोक्य तन्त्रान्तरे प्रणम्याग्रे समुपविष्टः। पिङ्गलकोऽपि तमाह—भद्र! किं चिराद् दृष्टः? दमनक आह—न किञ्चिद् देवपादानामस्माभिः प्रयोजनम्, तेनाहं नागच्छामि। तथापि [1]राजप्रयोजनविनाशमवलोक्य [2]सन्दह्यमानहृदयो व्याकुलतया स्वयमेवाभ्यागतो वक्तुम्। उक्तञ्च—

प्रियं वा यदि वा द्वेष्यं शुभं वा यदि वाऽशुभम्।
अपृष्टोऽपि हितं ब्रूयाद्यस्य नेच्छेत् पराभवम्॥ १८३॥

अथ तस्य साभिप्रायं वचनमाकर्ण्य पिङ्गलक आह—'किं वक्तुमना भवान्। तत् कथ्यताम् यत्कथनीयमस्ति?' स प्राह—देव! सञ्जीवको युष्मत्पादानामुपरि [3]द्रोहबुद्धिरिति [4]विश्वासगतस्य मम विजन इदमाह—भो दमनक! दृष्टा मयास्य पिङ्गलकस्य [5]सारासारता। तदहमेनं हत्वा सकलमृगाधिपत्यं त्वत्साचिव्यपदवीसमन्वितं करिष्यामि। पिङ्गलकोऽपि तद् [6]वज्रसारप्रहारसदृशं दारुणं वचः समाकर्ण्य मोहमुपगतो न किञ्चिदप्युक्तवान्। दमनकोऽपि तस्य तमाकारमालोक्य चिन्तितवान्—अयं तावत् [7]सञ्जीवकनिबद्धरागः, तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यति इति। उक्तञ्च—

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यते॥ १८४॥

तत्किमत्र युक्तम् इति। पिङ्गलकोऽपि [8]चेतनां समासाद्य कथमपि तमाह—'सञ्जीवकस्तावत्प्राणसमो भृत्यः। स कथं ममोपरि द्रोहबुद्धिं करोति?' दमनक आह—देव! भृत्योऽभृत्य [9]इत्यनैकान्तिकमेतत्। उक्तञ्च—न सोऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम्।
अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते॥ १८५॥

---

१. भवदीयकार्यहानिम्। २. दुःखितमनाः ३. अनिष्टं कर्तुं व्यवसित इति भावः। ४. विश्वासपात्रस्य। ५. बलाबलत्वम्। ६. अतिकठोरम्। ७. सञ्जीवकानुरक्त इत्यर्थः। ८. विचार्येत्यर्थः। ९. अनिश्चितम्। असङ्गतमिति भावः।

पिङ्गलक आह—भद्र ! तथापि मम तस्योपरि [1]चित्तवृत्तिर्न विकृतिं याति । अथवा साध्विदमुच्यते—

अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ १८६ ॥

दमनक आह—अत एवायं दोषः । उक्तञ्च—

यस्मिन्नैवाधिकं चक्षुरारोपयति पार्थिवः ।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥ १८७ ॥

अपरं केन गुणविशेषेण स्वामी सञ्जीवकं [2]निर्गुणकमपि निकटे धारयति । अथ देव ! यद्येवं चिन्तयसि [3]महाकायोऽयम् । अनेन रिपून् व्यापादयिष्यामि । तदस्मान्न सिध्यति, यतोऽयं [4]शष्पभोजी । देवपादानां पुनः शत्रवो मांसाशिनः । तद् [5]रिपुसाधनमस्य साहाय्येन न भवति । तस्मादेनं दूषयित्वा हन्यताम्, इति । पिङ्गलक आह—

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥ १८८ ॥

अन्यच्च । मयास्य तत्र वचनेनाभयप्रदानं दत्तम् । तत्कथं स्वयमेव व्यापादयामि । सर्वथा सञ्जीवकोऽयं सुहृदस्माकम् । न तं प्रति कश्चिद् [6]मन्युरस्ति । उक्तञ्च—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥ १८९ ॥

आदौ न वा प्रणयिनां प्रणयो विधेयो
दत्तोऽथवा प्रतिदिनं परिपोषणीयः ।
उत्क्षिप्य यत्क्षिपति तत्प्रकरोति लज्जां
भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥ १९० ॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ १९१ ॥

तद् द्रोहबुद्धेरपि मयास्य न [7]विरुद्धमाचरणीयम् । दमनक आह—

---

१. चित्तमन्यथा न भवतीत्यर्थः । २. गुणहीनं कार्याक्षममिति यावत् । ३. विशालकायो बलवानित्यर्थः । ४. तृणभक्षकः । ५. शत्रुविनाशः । ६. क्रोधः । ७. नानिष्टं करिष्यत इत्यर्थः ।

'स्वामिन् ! नैव राजधर्मो यद्द्रोहबुद्धिरपि लभ्यते' उक्तं च—

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥ १६२ ॥

अपरं त्वयास्य सखित्वात्सर्वोऽपि राजधर्मः परित्यक्तः । राजधर्माभावात् सर्वोऽपि विरक्तिं गतः । स सञ्जीवकः शष्पभोजी, भवान्मांसादः तव [1]प्रकृतयश्च । [2]यत्तवावन्ध्यव्यवसायबाह्यं कुतस्तासां मांसाशनम् । यद्रहितास्तास्त्वां त्यक्त्वा यास्यन्ति । ततोऽपि त्वं विनष्ट एव । अस्य सङ्गत्या पुनस्ते न कदाचिदा[3]खेटके मतिर्भविष्यति । उक्तं च—

यादृशैः सेव्यते भृत्यैर्यादृशांश्चोपसेवते ।
कदाचिन्नात्र सन्देहस्तादृक्भवति पूरुषः ॥ १६३ ॥

तथा च—सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकम्
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥ १६४ ॥

तथा च—असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥ १६५ ॥

अत एव [4]सन्तो नीचसङ्गं वर्जयन्ति । उक्तं च—

न ह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः ।
मत्कुणस्य च दोषेण हता मन्दविसर्पिणी ॥ १६६ ॥

पिङ्गलक आह—कथमेतत् । सोऽब्रवीत्—

## कथा ( ६ )

अस्ति कस्यचिन्महीपतेः कस्मिंश्चित्स्थाने मनोरमं शयनस्थानम् । तत्र शुक्लतरपटयुगलमध्यसंस्थिता मन्दविसर्पिणी नाम श्वेता यूका प्रतिवसति स्म । सा च तस्य महीपते रक्तमास्वादयन्ती सुखेन [5]कालं नयमाना तिष्ठति । अन्येद्युश्च तत्र शयने कुतश्चिद् भ्राम्यन्नग्निमुखो नाम मत्कुणः समायातः । अथ तं दृष्ट्वा सा [6]विषण्णवदना प्रोवाच—भो

१. सेवकादयश्चेत्यर्थः । २. हिंसाया अकरणात् तवोद्योगेन दुष्प्रापमिति यावत् । ३. मृगयायाम् । ४. सज्जनाः । ५. अतिवाहयन्तीत्यर्थः । ६. खिन्नचित्तेति भावः ।

अग्निमुख ! कुतस्त्वमत्रानुचितस्थाने समायातः ? तद्यावन्न कश्चित्पश्यति, तावच्छीघ्रं गम्यताम्' इति। स आह—भगवति ! गृहागतस्यासाधोरपि नैतद्युज्यते वक्तुम्। उक्तञ्च—

एह्यागच्छ समाश्वसासनमिदं कस्माच्चिराद् दृश्यसे
का वार्ता न्वतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात्।
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्तैर्लघुः स्वर्गदः ॥१९७॥

अपरं मयानेकमानुषाणामनेकविधानि रुधिराण्यास्वादितान्याहारदोषात्कटुतिक्तकषायाम्लरसास्वादानि। न च मया कदाचिन्मधुररक्तं समास्वादितम्। तद्यदि त्वं प्रसादं करोषि, तदस्य नृपते[1]र्विविधव्यञ्जनान्नपानचोष्यलेह्यस्वाद्वाहारवशादस्य शरीरे यन्मिष्टं रक्तं सञ्जातम्, [2]तदास्वादनेन सौख्यं सम्पादयामि जिह्वायाः, इति। उक्तञ्च—

रङ्कस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम्।
तन्मात्रं च स्मृतं सारं यदर्थं यतते जनः ॥ १९८ ॥
यद्येवं न भवेल्लोके कर्म जिह्वाप्रतुष्टिदम्।
चेन्न भृत्यो भवेत्कश्चित्कस्यचिद्वशगोऽथवा ॥ १९९ ॥
यदसत्यं वदेन्मर्त्यो यद्वाऽसेव्यं च सेवते।
यद् गच्छति विदेशं च तत्सर्वमुदरार्थतः ॥ २०० ॥

तन्मया [3]गृहागतेन बुभुक्षया पीड्यमानेन त्वत्सकाशाद्भोजनमर्थ[4]नीयम्, तन्न त्वयैकाकिन्याऽस्य भूपते रक्तभोजनं कर्तुं युज्यते। तच्छ्रुत्वा मन्दविसर्पिण्याह—भो मत्कुण ! अहमस्य नृपतेर्निद्रावशं गतस्य रक्तमास्वादयामि। पुनस्त्वमग्निमुखश्चपलश्च। तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ, अभीष्टतरं रक्तमास्वादय। सोऽब्रवीत्—भगवति ! एवं करिष्यामि। यावत्त्वं नास्वादयसि प्रथमं नृपरक्तम्, तावन्मम [5]देवगुरुकृतः शपथः स्यात्, यदि तदास्वादयामि। एवं तयोः परस्परं

---

१. षड्विधरसमयाहारकरणादित्यर्थः। २. मधुररक्तपानेनानन्दमनुभवामीति भावः। ३. अतिथिनेत्यर्थः। ४. याचनीयम्। ५. देवान् गुरूंश्चोद्दिश्य कृत इत्यर्थः।

वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः। अथासौ मत्कुणो [1]जिह्वालौल्यप्रकृष्टौत्सुक्याज्जाग्रतमपि तं महीपतिमदशत्। अथवा साध्विदमुच्यते—

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ २०१ ॥
यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥ २०२ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः—'अहो, ज्ञायतामत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति येनाहं दष्टः' इति। अथ ये [2]कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षाञ्चक्रुः। अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तं प्रविष्टः। सा मन्दविसर्पिण्यपि वस्त्रसन्ध्यन्तर्गता तैर्दृष्टा व्यापादिता च। अतोऽहं ब्रवीमि—'न ह्यविज्ञातशीलस्य' इति। एवं ज्ञात्वा त्वयैष वध्यः। नो चेत्त्वां व्यापादयिष्यति। उक्तं च—

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः।
स एव मृत्युमाप्नोति यथा राजा ककुद्द्रुमः ॥ २०३ ॥

पिङ्गलक आह—कथमेतत्। सोऽब्रवीत्—

## कथा (७)

कस्मिंश्चिद्वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित्क्षुधाविष्टो जिह्वालौल्यान्नगरान्तरे प्रविष्टः। अथ तं नगरवासिनः [3]सारमेया अवलोक्य सर्वतः शब्दायमानाः [4]परिधाव्य तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः। सोऽपि तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नरजकगृहं प्रविष्टः। तत्र च नीलीरसपरिपूर्णं महाभाण्डं सज्जीकृतमासीत्। तत्र सारमेयैराक्रान्तो भाण्डमध्ये पतितः। अथ यावन्निष्क्रान्तस्तावन्नीलवर्णः सञ्जातः। तत्रापरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टां दिशं जग्मुः। चण्डरवोऽपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे। न च नीलवर्णेन

१. रक्तपानोत्कण्ठातिशयादिति यावत्। २. अन्तःपुरचारिणो वृद्धा भृत्या इति भावः। ३. श्वानः। ४. समन्ताद्धावित्वेत्यर्थः।

कदाचिद् [1]निजरङ्गस्त्यज्यते उक्तं च—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोर्यथा ॥ २०४ ॥

अथ तं [2]हरगलगरलतमालसमप्रभपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयोऽरण्यनिवासिनो भयव्याकुलचित्ताः समन्तात्पलायनक्रियां कुर्वन्ति । कथयन्ति च—न ज्ञायतेऽस्य कीदृग्विचेष्टितं पौरुषं च । तद् दूरतरं गच्छामः । उक्तं च—

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् ।
न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः ॥ २०५ ॥

चण्डरवोऽपि तान्भयव्याकुलितान्विज्ञायेदमाह—'भो भोः [3]श्वापदाः ! किं यूयं मां दृष्ट्वैव सन्त्रस्ता व्रजथ । तन्न भेतव्यम् । अहं ब्रह्मणाद्य स्वयमेव सृष्ट्वोभिहितः यच्छ्वापदानां मध्ये कश्चिद्राजा नास्ति । तत्त्वं मयाद्य सर्वश्वापदप्रभुत्वेऽभिषिक्तः [4]ककुद्द्रुमाभिधः । ततो गत्वा क्षितितले तान्सर्वान्परिपालय इति ततोऽहमत्रागतः । तन्मम [5]छत्रच्छायायां सर्वैरेव श्वापदैर्वर्तितव्यम् । अहं ककुद्द्रुमो नाम राजा त्रैलोक्येऽपि संजातः । तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः 'स्वामिन् ! प्रभो ! समादिश' इति वदन्तस्तं परिवव्रुः । अथ तेन सिंहस्यामात्यपदवी प्रदत्ता । व्याघ्रस्य शय्यापालत्वम् । द्वीपिनस्ताम्बूलाधिकारः । वृकस्य द्वारपालकत्वम् । ये चात्मीयाः शृगालास्तैः सहालापमात्रमपि न करोति । शृगालाः सर्वेऽप्यर्धचन्द्रं [6]दत्त्वा निःसारिताः । एवं तस्य राज्यक्रियायां वर्तमानस्य ते सिंहादयो मृगान् व्यापाद्य तत्पुरतः प्रक्षिपन्ति । सोऽपि प्रभुधर्मेण सर्वेषां तान्प्रविभज्य प्रयच्छति । एवं गच्छति काले कदाचित्तेन समागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलोऽश्रावि । तं शब्दं श्रुत्वा

---

१. स्वकीयो वर्णः । २. हरस्य शिवस्य गले कण्ठे यद् गरलं कालकूटं तथा तमालं तमालतरुपुष्पमिति यावत्तयोः समा तुल्या प्रभा कान्तिर्यस्य तं नितान्तकृष्णवर्णमिति भावः । ३. वन्यजन्तव इत्यर्थः । ४. ककुद्द्रुमनामकः । ५. आधिपत्येऽधीनतायामिति भावः । ६. गलहस्तं दत्त्वेत्यर्थः ।

[1]पुलकिततनुरानन्दाश्रुपरिपूर्णनयन उत्थाय तारस्वरेण [2]विरोतुमारब्धवान्। अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य शृगालोऽयमिति मत्वा सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः—'भोः, [3]वाहिता वयमनेन क्षुद्रशृगालेन। तद्वध्यताम्' इति। सोऽपि तदाकर्ण्य पलायितुमिच्छँस्तत्र स्थान एव सिंहादिभिः खण्डशः कृतो मृतश्च। अतोऽहं ब्रवीमि—त्यक्ताश्चाभ्यन्तरा येन, इति। तदाकर्ण्य पिङ्गलक आह—भो दमनक! कः [4]प्रत्ययोऽत्र विषये यत्स ममोपरि दुष्टबुद्धिः। स आह—'यदद्य ममाग्रे तेन निश्चयः कृतो यत्प्रभाते पिङ्गलकं वधिष्यामि, तदत्रैव प्रत्ययः। प्रभाते [5]अवसरवेलायाम् [6]आरक्तमुखनयनः स्फुरिताधरो दिशोऽवलोकयन्ननुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्या विलोकयिष्यति। एवं ज्ञात्वा यदुचितं तत्कर्तव्यम्।' इति कथयित्वा सञ्जीवकसकाशं गतस्तं प्रणम्योपविष्टः। सञ्जीवकोऽपि [7]सोद्वेगाकारं मन्दगत्या समायान्तं तमुद्वीक्ष्य सादरतरमुवाच—'भो मित्र! स्वागतम्। चिराद्दृष्टोऽसि। अपि शिवं भवतः? तत्कथय येनादेयमपि तुभ्यं गृहागताय प्रयच्छामि। उक्तं च—

ते धन्यास्ते विवेकज्ञास्ते सभ्या इह भूतले।
आगच्छन्ति गृहे येषां कार्यार्थं सुहृदो जनाः॥ २०६॥

दमनक आह—भोः कथं शिवं सेवकजनस्य।

सम्पत्तयः परायत्ताः सदा चित्तमनिर्वृतम्।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः॥ २०७॥

तथा च—सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम्।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम्॥ २०८॥

तावज्जन्मातिदुःखाय ततो दुर्गतता सदा।
तत्रापि सेवया वृत्तिरहो दुःखपरम्परा॥ २०९॥

जीवन्तोऽपि मृताः पञ्च श्रूयन्ते किल भारते।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः॥ २१०॥

---

१. रोमाञ्चितगात्रः। २. शब्दं कर्तुमित्यर्थः। ३. प्रतारिताः कर्म कारिता इति यावत्। ४. प्रमाणमित्यर्थः। ५. भवत्समीपागमनकाले। ६. अत्यन्तक्रुद्ध इति भावः। ७. उद्विग्नं सभयमित्यर्थः।

नाश्नाति स्वेच्छयौत्सुक्याद्विनिद्रो न प्रबुध्यते ।
न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ २११ ॥
सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितम् ।
स्वच्छन्दं चरति श्वाऽत्र सेवकः परशासनात् ॥ २१२ ॥
भूशय्या ब्रह्मचर्यं च कृशत्वं लघुभोजनम् ।
सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥ २१३ ॥
शीतातपादिकष्टानि सहते यानि सेवकः ।
धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते ॥ २१४ ॥
मृदुनापि सुवृत्तेन सुमिष्टेनापि हारिणा ।
मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥ २१५ ॥

संजीवक आह—'अथ भवान्किंवक्तुमनाः ।' सोऽब्रवीत्—'मित्र ! सचिवानां 'मन्त्रभेदं कर्तुं न युज्यते' उक्तं च—

यो मन्त्रं स्वामिनो भिन्द्यात्साचिव्ये संनियोजितः ।
स हत्वा नृपकार्यं तत्स्वयं च नरकं व्रजेत् ॥ २१६ ॥
येन यस्य कृतो भेदः सचिवेन महीपतेः ।
तेनाशस्त्रवधस्तस्य कृत इत्याह नारदः ॥ २१७ ॥

तथापि मया तव [2]स्नेहपाशबद्धेन मन्त्रभेदः कृतः । यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टश्च । उक्तं च—

विश्रम्भाद्यस्य यो मृत्युमवाप्नोति कथञ्चन ।
तस्य हत्या तदुत्था सा प्राहेदं वचनं मनुः ॥ २१८ ॥

तत्तवोपरि पिङ्गलकोऽयं दुष्टबुद्धिः । कथितं चाद्यानेन मत्पुरश्च-तुष्कर्णतया[3] यत्प्रभाते संजीवकं हत्वा समस्तमृगपरिवारं चिरात्तृप्तिं नेष्यामि ततः स मयोक्तः—स्वामिन् ! न युक्तमिदं यन्मित्रद्रोहेण जीवनं क्रियते । उक्तञ्च—

अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति ।
तदर्हेण विचीर्णेन न कथञ्चित्सुहृद्द्रुहः' ॥ २१९ ॥

---

१. रहस्यमयीं वार्तां प्रकटीकर्त्तु मित्यर्थः । २. प्रेमपरवशेन हितचिन्तकेनेति यावत् । ३. 'षट्कर्णो भिद्यते मन्त्रः' इति न्यायेन केवलं मया सह मन्त्रणां विधाय, रहसीति भावः ।

ततस्तेनाहं [1]सामर्षेणोक्तः—भो! दुष्टबुद्धे! सञ्जीवकस्तावच्छष्पभोजी, वयं मांसाशिनः, तदस्माकं स्वाभाविकं वैरम्' इति कथं रिपुरुपेक्ष्यते। तस्मात्सामादिभिरुपायैर्हन्यते। न च हते तस्मिन्दोषः स्यात्। उक्तं च—

दत्त्वापि कन्यकां वैरी निहन्तव्यो विपश्चिता।
अन्योपायैरशक्यो यो हते दोषो न विद्यते॥ २२०॥
कृत्याकृत्यं न मन्येत क्षत्रियो युधि सङ्गतः।
प्रसुप्तो द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः॥ २२१॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमिहागतः। साम्प्रतं मे नास्ति विश्वासघातकदोषः। मया सुगुप्तमन्त्रस्तव निवेदितः। अथ यत्ते [2]प्रतिभाति तत्कुरुष्व इति। अथ सञ्जीवकस्तस्य तद्वज्रपातदारुणं वचनं श्रुत्वा [3]मोहमुपागतः। अथ चेतनां लब्ध्वा सवैराग्यमिदमाह—भोः, साध्विदमुच्यते—

दुर्जनगम्या नार्यः प्रायेणास्नेहवान्भवति राजा।
कृपणानुसारि च धनं मेघो गिरिदुर्गवर्षी च॥ २२२॥
अहं हि संमतो राज्ञो य एवं मन्यते कुधीः।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः॥ २२३॥
वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम्।
वरं व्याधिर्मनुष्याणां नाधिकारेण सम्पदः॥ २२४॥

तदयुक्तं मया कृतं यदनेन सह मैत्री विहिता। उक्तं च—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः॥ २२५॥

तथा च—

मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम्॥२२६॥

तद्यदि गत्वा तं [4]प्रसादयामि, तथापि न [5]प्रसादं यास्यति।

---

१. प्रकुपितेन। २. रोचते। ३. मूर्च्छितः। ४. अनुनयामि। ५. अनुकूलो भविष्यतीत्यर्थः।

उक्तं च—निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रशाम्यति ।
अकारणद्वेषपरो हि यो भवेत्
कथं नरस्तं परितोषयिष्यति ॥ २२७ ॥

अहो, साधु चेदमुच्यते—
भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि ।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदा शङ्किनी ॥ २२८ ॥

तथा च—भावस्निग्धैरुपकृतमपि द्वेष्यतां याति लोके
साक्षादन्यैरपकृतमपि प्रीतये चोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २२९ ॥

तत्परिज्ञातं मया यत्प्रसादमसहमानैः समीपवर्तिभिरेष पिङ्गलकः प्रकोपितः । तेनायं [1]ममादोषस्याप्येवं वदति । उक्तं च—

प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः ।
सपत्न्य इव संक्रुद्धाः स्वपत्न्याः सुकृतैरपि ॥ २३० ॥

भवति चैवं यत् [2]गुणवत्सु समीपवर्तिषु गुणहीनानां न प्रसादो भवति । उक्तं च—

गुणवत्तरपात्रेण च्छाद्यन्ते गुणिनां गुणाः ।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति ॥ २३१ ॥

दमनक आह—भो मित्र ! यद्येवं तन्नास्ति ते भयम् । प्रकोपितोऽपि स दुर्जनैस्तव वचनरचनया प्रसादं यास्यति । स आह—भोः, न युक्तमुक्तं भवता । लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते । उपायान्तरं विधाय ते नूनं घ्नन्ति । उक्तं च—

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः ।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा ॥ २३२ ॥

दमनक आह—कथमेतत् ? सोऽब्रवीत्—

---

१. निरपराधस्यापीति भावः । २. गुणवतां हि सन्निधाने सति निर्गुणानां समादरो न भवतीत्यर्थः ।

# कथा ( ८ )

कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म । तस्य चानुचरा अन्ये [1]द्वीपिवायसगोमायवः सन्ति । अथ कदाचित्तैरितस्ततो भ्रमद्भिः [2]सार्थभ्रष्टः क्रथनको नामोष्ट्रो दृष्टः । अथ सिंह आह—अहो अपूर्वमिदं सत्त्वम् । तज्ज्ञायतां [3]किमेतदारण्यकं [4]ग्राम्यं वा इति । तच्छ्रुत्वा वायस आह—भोः स्वामिन् ! ग्राम्योऽयमुष्ट्रनामा जीवविशेषस्तव भोज्यः । तद्व्यापाद्यताम् । सिंह आह—नाहं गृहमागतं हन्मि । उक्तं च—

> गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम् ।
> यो हन्यात्तस्य पापं स्याच्छतब्राह्मणघातजम् ॥ २३३ ॥

तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां येनास्यागमनकारणं पृच्छामि । अथासौ सर्वैरपि विश्वास्याभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः प्रणम्योपविष्टश्च । ततस्तस्य पृच्छतस्तेनात्मवृत्तान्तः [5]सार्थभ्रंशसमुद्भवो निवेदितः । सिंहेनोक्तम्—'भोः क्रथनक ! मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहनकष्टभागी भूयाः ।' तदत्रैवारण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन्मया सह सदैव वस ।' सोऽपि 'तथा' इत्युक्त्वा तेषां मध्ये विचरन्न कुतोऽपि भयमिति सुखेनास्ते । तथान्येद्युर्मदोत्कटस्य महागजेनारण्यचारिणा सह युद्धमभवत् । ततस्तस्य दन्तमुशलप्रहारैर्व्यथा सञ्जाता, व्यथितः कथमपि प्राणैर्न वियुक्तः । अथ शरीरासामर्थ्यान्न कुत्रचित्पदमपि चलितुं शक्नोति । तेऽपि सर्वे काकादयो [6]अप्रभुत्वेन क्षुधाविष्टाः परं दुःखं भेजुः । अथ तान् सिंहः प्राह—'भोः' अन्विष्यतां कुत्रचित्किञ्चित्सत्त्वं येनाहमेतामपि दशां प्राप्तस्तद्धत्वा युष्मद्भोजनं सम्पादयामि । अथ ते चत्वारोऽपि भ्रमितुमारब्धा यावन्न किञ्चित्सत्त्वं पश्यन्ति तावद्वायसशृगालौ परस्परं मन्त्रयतः । शृगाल आह—भो वायस ! किं [7]प्रभूतभ्रान्तेन । अयमस्माकं प्रभोः क्रथनको विश्वस्तस्तिष्ठति

---

१. शार्दूलकाकशृगालाः । २. स्वयूथात्प्रच्युतः । ३. वन्यम् । ४. ग्रामवासि । ५. यूथप्रच्युतिसम्बन्धीत्यर्थः । ६. निजाहारप्रापणासमर्थत्वेन । ७. इतस्ततोऽधिकेन भ्रमणेनेत्यर्थः ।

तदेनं हत्वा प्राणयात्रां कुर्मः। वायस आह—'युक्तमुक्तं भवता परं स्वामिना तस्याभयप्रदानं दत्तमास्ते न वध्योऽयमिति। शृगाल आह—'भो वायस! अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी वधं करिष्यति। तत्तिष्ठन्तु भवन्तोऽत्रैव यावदहं गत्वा प्रभोराज्ञां गृहीत्वा चागच्छामि' एवमभिधाय सत्वरं सिंहमुद्दिश्य प्रस्थितः। अथ सिंहमासाद्येदमाह—स्वामिन्! समस्तं वनं भ्रान्त्वा वयमागताः। न किञ्चित्स-त्त्वमासादितम्। तत्किं कुर्मो वयम्। सम्प्रति वयं बुभुक्षया पदमेकमपि प्रचलितुं न शक्नुमः। देवोऽपि [1]पथ्याशी वर्तते। तद्यदि देवादेशो भवति तत् [2]क्रथनकपिशितेनाद्य [3]पथ्यक्रिया क्रियते। अथ सिंहस्तस्य तद्दारुणं वचनमाकर्ण्य सकोपमिदमाह—'धिक्पापाधम! यद्येवं भूयोऽपि वदसि, ततस्त्वां तत्क्षणमेव वधिष्यामि। यतो मया तस्याभयं प्रदत्तम्, तत्कथं व्यापादयामि। उक्तं च—

न गोप्रदानं न महीप्रदानं न चान्नदानं हि तथा प्रधानम्।
यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानम्' ॥ २३४ ॥

तच्छ्रुत्वा शृगाल आह—'स्वामिन्! यद्यभयप्रदानं दत्त्वा वधः क्रियते तदैष दोषो भवति। पुनर्यदि देवपादानां भक्त्या स आत्मनो जीवितव्यं प्रयच्छति तन्न दोषः। ततो यदि स स्वयमेवात्मानं वधाय [4]नियोजयति तद्वध्यः। अन्यथास्माकं मध्यादेकतमो वध्य इति। यतो देवपादाः पथ्याशिनः [5]क्षुन्निरोधाद[6]न्यां दशां यास्यन्ति। तत्किमेतैः प्राणैरस्माकं ये स्वाम्यर्थे न यास्यन्ति। अपरं पश्चादप्यस्माभिर्वह्निप्रवेशः कार्यः, यदि स्वामिपादानां किञ्चिदनिष्टं भविष्यति। उक्तं च—

यस्मिन् कुले यः पुरुषः प्रधानः स सर्वयत्नैः परिरक्षणीयः।
तस्मिन्विनष्टे कुलसारभूते न नाभिभङ्गे ह्यरका वहन्ति ॥ २३५ ॥

---

१. पथ्यं रोगिणो हितकरं भोजनं तद् अश्नाति भक्षयतीति स तथोक्तः। २. उष्ट्रस्य मांसेन। ३. रोगिहितकरं भोजनम्। ४. अर्पयति। ५. बुभुक्षासमये भोजनाकरणादिति भावः। ६. मृत्युमित्यर्थः।

तदाकर्ण्य मदोत्कट आह—यद्येवं तत्कुरुष्व यद्रोचते। तच्छ्रुत्वा स सत्वरं गत्वा तानाह—भोः स्वामिनो [1]महत्यवस्था वर्तते। तत्किं [2]पर्यटितेन। तेन विना कोऽत्रास्मान्रक्षयिष्यति। तद्गत्वा तस्य [3]क्षुद्रोगात्परलोकं प्रस्थितस्यात्मशरीरदानं कुर्मः, येन स्वामिप्रसादस्यानृणतां गच्छामः। उक्तञ्च—

आपदं प्राप्नुयात्स्वामी यस्य भृत्यस्य पश्यतः।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत्॥ २३६॥

तदनन्तरं ते सर्वे [4]बाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान्दृष्ट्वा मदोत्कट आह—'भोः, प्राप्तं दृष्टं वा किञ्चित्सत्त्वम्?' अथ तेषां मध्यात्काकः प्रोवाच—स्वामिन्! वयं तावत्सर्वत्र पर्यटिताः। परं न किञ्चित्सत्त्वमासादितं दृष्टं वा। तदद्य मां भक्षयित्वा प्राणान्धारयतु स्वामी, येन देवस्या[5]श्वासनं भवति मम पुनः स्वर्गप्राप्तिरिति। उक्तञ्च—

स्वाम्यर्थे यस्त्यजेत्प्राणान्भृत्यो भक्तिसमन्वितः।
परं स पदमाप्नोति जरामरणवर्जितम्॥ २३७॥

तच्छ्रुत्वा शृगाल आह—भोः [6]स्वल्पकायो भवान् तव भक्षणात् स्वामिनस्तावत्प्राणयात्रा न भवति। अपरो दोषश्च तावत्समुत्पद्यते। उक्तञ्च—काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम्।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते॥ २३८॥

तद्दर्शिता स्वामिभक्तिर्भवता। [7]गतं चानृण्यं भर्तृपिण्डस्य। प्राप्तश्चोभयलोके [8]साधुवादः। तदपसराग्रतः। अहं स्वामिनं विज्ञापयामि। तथानुष्ठिते शृगालः सादरं प्रणम्योपविष्टः—स्वामिन्! मां भक्षयित्वाद्य प्राणयात्रां विधाय ममोभयलोकप्राप्तिं कुरु। उक्तञ्च—

स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः।
यतस्ततो न दोषोऽस्ति तेषां ग्रहणसम्भवः॥ २३९॥

---

१. दयनीया दशा। २. भ्रमणेन। ३. बुभुक्षया मृतप्रायस्येत्यर्थः। ४. वाष्पैः पूरिता दृशो येषां ते रुदन्त इति भावः। ५. जीवनरक्षेत्यर्थः। ६. अतिलघुरिति यावत्। ७. प्रभुकृतात्पोषणरूपाद् ऋणादात्मा मोचितः प्रभुभक्तिप्रदर्शनेनेति भावः। ८. धन्यवादः ख्यातिरिति भावः।

अथ तच्छ्रुत्वा द्वीप्याह—भोः साधूक्तं भवता पुनर्भवानपि स्वल्पकायः स्वजातिश्च। नखायुधत्वादभक्ष्य एव। उक्तञ्च—

नाभक्ष्यं भक्षयेत्प्राज्ञः प्राणैः कण्ठगतैरपि।
विशेषात्तदपि स्तोकं लोकद्वयविनाशकम्॥ २४०॥

तद्दर्शितं त्वयात्मनः [1]कौलीन्यम्। अथवा साधु चेदमुच्यते—

एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम्।
आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम्॥ २४१॥

तदपसराग्रतः, येनाहं स्वामिनं विज्ञापयामि। तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह—स्वामिन्! क्रियतामद्य मम प्राणैः प्राणयात्रा, दीयतामक्षयो वासः स्वर्गे। मम विस्तार्यतां क्षितितले प्रभूततरं यशः। तन्नात्र [2]विकल्पः कार्यः। उक्तञ्च—

मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम्।
भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले॥ २४२॥

तच्छ्रुत्वा क्रथनकश्चिन्तयामास—एतैस्तावत्सर्वैरपि शोभनानि वाक्यानि प्रोक्तानि। न चैकोऽपि स्वामिना विनाशितः। तदहमपि प्राप्तकालं विज्ञापयामि, येन मम वचनमेते त्रयोऽपि [3]समर्थयन्ति। इति निश्चित्य प्रोवाच—भोः सत्यमुक्तं भवता। परं भवानपि नखायुधः। तत्कथं भवन्तं स्वामी भक्षयति। उक्तञ्च—

मनसाऽपि स्वजात्यानां योऽनिष्टानि प्रचिन्तयेत्।
भवन्ति तस्य तान्येव इह लोके परत्र च॥ २४३॥

तदपसराग्रतः, येनाहं स्वामिनं विज्ञापयामि। तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच—स्वामिन्! एते तावदभक्ष्या भवताम्। तन्मम प्राणैः प्राणयात्रा विधीयताम्, येन ममोभयलोकप्राप्तिर्भवति। उक्तञ्च—न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः॥ २४४॥

---

१. सद्वंशजातत्वम्। २. मारयामि न वेत्यात्मकः सन्देहः। ३. प्रमाणयन्ति अनुमोदेरन्नित्यर्थः।

एवमभिहिते ताभ्यां [1]शृगालचित्रकाभ्यां [2]विदारितोभयकुक्षिः क्रथनकः प्राणानत्याक्षीत् । ततश्च तैः क्षुद्रपण्डितैः सर्वैर्भक्षितः । अतोऽहं ब्रवीमि—'बहवः पण्डिताः क्षुद्राः' इति । तद्भद्र ! [3]क्षुद्रपरिवारोऽयं ते राजा मया सम्यग्ज्ञातः । सतामसेव्यश्च । उक्तञ्च—

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते ।
यथा गृध्रसमासन्नः कलहंसः समाचरेत् ॥ २४५ ॥

तथा च—गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः सभासदैः ।
हंसाकारोऽपि सन्त्याज्यो गृध्राकारः स तैर्नृपः ॥ २४६ ॥

तन्नूनं ममोपरि केनचिद् दुर्जनेनायं प्रकोपितः, तेनैवं वदति अथवा भवत्येतत् । उक्तञ्च—

मृदुना सलिलेन खन्यमानान्यवघृष्यन्ति गिरेरपि स्थलानि ।
उपजापविदां च कर्णजापैः किमु चेतांसि मृदूनि मानवानाम् ॥ २४७ ॥
कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ।
क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन ॥ २४८ ॥

अथवा साध्विदमुच्यते—

पादाहतोऽपि दृढदण्डसमाहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।
कोऽप्येष एव पिशुनोग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥ २४९ ॥

तथा च—अहो खलभुजङ्गस्य विपरीतो वधक्रमः ।
कर्णे लगति चैकस्य प्राणैरन्यो वियुज्यते ॥ २५० ॥

तदेवं गतेऽपि किं कर्तव्यमित्यहं त्वां सुहृद्भावात्पृच्छामि । दमनक आह—तद्देशान्तरगमनं युज्यते । नैवंविधस्य कुस्वामिनः सेवां विधातुम् । उक्तञ्च—

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ २५१ ॥

---

१. शृगालशार्दूलाभ्याम् । २. विपाटितकुक्षिद्वयः । ३. क्षुद्रो नीचस्वभावः परिवारः अमात्यादिः सहचरवर्ग इति यावत् यस्य सः ।

सञ्जीवक आह—अस्माकमुपरि स्वामिनि कुपिते गन्तुं न शक्यते न चान्यत्र गतानामपि [1]निर्वृतिर्भवति। उक्तञ्च—

महतां योऽपराध्येत दूरस्थोऽस्मीति नाश्वसेत्।
दीर्घौ बुद्धिमतो बाहू नाभ्यां हिंसति हिंसकम् ॥ २५२ ॥

तद्युद्धं मुक्त्वा मे नान्यदस्ति [2]श्रेयस्करम्। उक्तञ्च—

न तान् हि तीर्थैस्तपसा च लोकान्
स्वर्गैषिणो दानशतैः सुवृत्तैः।
क्षणेन यान्यान्ति रणेषु धीराः
प्राणान् समुज्झन्ति हि ये सुशीलाः॥ २५३ ॥

मृतैः सम्प्राप्यते स्वर्गो जीवद्भिः कीर्तिरुत्तमा।
तदुभावपि शूराणां गुणावेतौ सुदुर्लभौ ॥ २५४ ॥

ललाटदेशे रुधिरं स्रवत्तु शूरस्य यस्य प्रविशेच्च वक्त्रे।
तत्सोमपानेन समं भवेच्च संग्रामयज्ञे विधिवत्प्रदिष्टम् ॥२५५॥

तथा च—होमार्थैर्विधिवत्प्रदानविधिना सद्विप्रवृन्दार्चनै-
र्यज्ञैर्भूरिसुदक्षिणैः सुविहितैः सम्प्राप्यते यत्फलम्।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुम्भिस्तत्फलमाहवे विनिहतैः सम्प्राप्यते तत्क्षणात् ॥ २५६ ॥

तदाकर्ण्य दमनकश्चिन्तयामास—युद्धाय कृतनिश्चयोऽयं दृश्यते दुरात्मा। तद्यदि कदाचित्तीक्ष्णश्रृङ्गाभ्यां स्वामिनं प्रहरिष्यति तन्महानर्थः [3]सम्पत्स्यते। तदेनं भूयोऽपि स्वबुद्धया प्रबोध्य तथा करोमि यथा देशान्तरगमनं करोति। आह च—भो मित्र! सम्यगभिहितं भवता। परं किन्तु कः स्वामिभृत्ययोः संग्रामः? उक्तञ्च—

बलवन्तं रिपुं दृष्ट्वा नैवात्मानं प्रकोपयेत्।
बलवद्भिश्च कर्तव्या शरच्चन्द्रप्रकाशता ॥ २५७ ॥

अन्यच्च—शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद्यथा ॥ २५८ ॥

सञ्जीवक आह—कथमेतत्। सोऽब्रवीत्—

---

१. कल्याणम्। २. हितकरम्। ३. भविष्यति।

## कथा ( ६ )

कस्मिंश्चित्समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म। ततो गच्छति काले [1]ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त। अथासन्नप्रसवा सती सा टिट्टिभमूचे—'भोः कान्त! मम प्रसवसमयो वर्तते। [2]तद्विचिन्त्यतां किमपि [3]निरुपद्रवं स्थानम्, येन तत्राहमण्डकविमोक्षणं करोमि। टिट्टिभः प्राह—भद्रे! रम्योऽयं समुद्रप्रदेशः! तदत्रैव प्रसवः कार्यः। सा आह—'अत्र पूर्णिमादिने [4]समुद्रवेला [5]चरति। सा मत्तगजेन्द्रानपि समाकर्षति। तद् दूरमन्यत्र किञ्चित्स्थानमन्विष्यताम्।' तच्छ्रुत्वा विहस्य टिट्टिभः प्राह—भद्रे! न युक्तमुक्तं भवत्या। का [6]मात्रा समुद्रस्य यो मम [7]दूषयिष्यति [8]प्रसूतिम्। किं न श्रुतं भवत्या—

बद्धाम्बरचरमार्गं व्यपगतधूमं सदा महद्भयदम्।
मन्दमतिः कः प्रविशति हुताशनं स्वेच्छया मनुजः ॥ २५९ ॥

मत्तेभकुम्भविदलनकृतश्रमं सुप्तमन्तकप्रतिमम्।
यमलोकदर्शनेच्छुः सिंहं बोधयति को नाम ॥ २६० ॥

को गत्वा यमसदनं स्वयमन्तकमादिशत्यजातभयः।
प्राणानपहर मत्तो यदि शक्तिः काचिदस्ति तव ॥ २६१ ॥

प्रालेयलेशमिश्रे मरुति प्राभातिके च वाति जडे।
गुणदोषज्ञः पुरुषो जलेन कः शीतमपनयति ॥ २६२ ॥

तस्माद् [9]विश्रब्धात्रैव गर्भं मुञ्च। उक्तञ्च—

यः पराभवसन्त्रस्तः स्वस्थानं सन्त्यजेन्नरः।
तेन चेत्पुत्रिणी माता तद्वन्ध्या केन कथ्यते ॥ २६३ ॥

तच्छ्रुत्वा समुद्रश्चिन्तयामास—अहो गर्वः [10]पक्षिकीटस्यास्य। अथवा साध्विदमुच्यते—

---

१. गर्भधारणानुकूलकालं प्राप्येत्यर्थः। २. अन्विष्यतामित्यर्थः। ३. निरापत्। ४. सागरसलिलम्। (ज्वारभाटा) ५. वृद्धिं गच्छति चन्द्रोदयादिति भावः। ६. शक्तिः। ७. नाशयिष्यतीत्यर्थः। ८. सन्ततिम्। ९. निर्भया। १०. तुच्छस्य पक्षिण इत्यर्थः।

उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते ॥ २६४ ॥

तन्मयास्य [1]प्रमाणं [2]कुतूहलादपि द्रष्टव्यम्। किं ममैषोऽण्डाप-हारे कृते करिष्यति। इति चिन्तयित्वा स्थितः। अथ प्रसवानन्तरं प्राणयात्रार्थं गतायाष्टिट्टिभ्याः समुद्रो [3]वेलाव्याजेनाण्डान्यपजहार। अथायाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभ-मूचे—भो मूर्ख! कथितमासीन्मया ते यत्समुद्रवेलयाण्डानां विनाशो भविष्यति। तद्दूरतरं व्रजावः। परं मूढतयाहङ्कारमाश्रित्य मम वचनं न करोषि, अथवा साध्विदमुच्यते—

सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति ॥ २६५ ॥

टिट्टिभ आह—कथमेतत्। साऽब्रवीत्—

## कथा (१०)

अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य च सङ्कटविकटनाम्नी मित्रे हंसजातीये [4]परमस्नेहकोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य तेन सहानेकदेवर्षिमहर्षीणां कथाः कृत्वा [5]अस्त-मयवेलायां [6]स्वनीडसंश्रयं कुरुतः। अथ गच्छता कालेनावृष्टिवशात्सरः शनैः शनैः शोषमगमत्। ततस्तद्दुःखदुःखितौ तावूचतुः—भो मित्र! [7]जम्बालशेषमेतत्सरः सञ्जातम्। तत्कथं भवान्भविष्यतीति व्याकुलत्वं नो हृदि वर्तते। तच्छ्रुत्वा कम्बुग्रीव आह—भोः साम्प्रतं नास्त्यस्माकं [8]जीवितव्यं जलाभावात्। तथाप्युपायश्चिन्त्यतामिति। उक्तञ्च—

त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात्कदाचिद् गतिमाप्नुयात्सः।
यथा समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्तुमेव ॥ २६६ ॥

---

१. बलमित्यर्थः। २. मनोविनोदादिहेतोरपीत्यर्थः। ३. सलिलवृद्धिरूपेण छलेनेति यावत्। ४. अत्यन्तमनुरक्ते। ५. सायङ्काले। ६. निजनीडे निवसत इत्यर्थः। ७. कर्दममात्रावशेषम्। ८. प्राणरक्षा।

अपरञ्च—मित्रार्थे बान्धवार्थे च बुद्धिमान्यतते सदा ।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥ २६७ ॥

तदानीयतां काचिद्दृढरज्जुर्लघु काष्ठं वा । अन्विष्यतां च [1]प्रभूतजलसनाथं सरः, येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां [2]कोटिभागयोस्तत्काष्ठं मया सहितं [3]संगृह्य तत्सरो नयथः ।' तावूचतुः—भो मित्र ! एवं करिष्यावः । परं भवता [4]मौनव्रतेन स्थातव्यम् । नोचेत्तव काष्ठात्पातो भविष्यति । तथानुष्ठिते गच्छता कम्बुग्रीवेण [5]अधोभागव्यवस्थितं किञ्चित्पुरमालोकितम् । तत्र ये पौरास्ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः—'अहो चक्राकारं किमपि पक्षिभ्यां नीयते पश्यत पश्यत ।' अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह—भोः किमेष कोलाहलः इति वक्तुमना अर्धोक्तिपतितः पौरैः खण्डशः कृतश्च । अतोऽहं ब्रवीमि—सुहृदां हितकामानामिति ।

तथा च—अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ २६८ ॥

टिट्टिभ आह—कथमेतत् । साऽब्रवीत्—

## कथा ( ११ )

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति । अथ कदाचित्तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तम्—यदहो बहुमत्स्योऽयं ह्रदः । कदाचिदपि [6]नायमस्माभिरन्वेषितः । तदद्य तावद् [7]आहारवृत्तिः सञ्जाता । सन्ध्यासमयश्च संवृत्तः । ततः प्रभातेऽत्रागन्तव्यमिति निश्चयः । अतस्तेषां [8]तत्कुलिशपातोपमं वचः समाकर्ण्य अनागतविधाता सर्वान् मत्स्यानाहूयेदमूचे—अहो श्रुतं भवद्भिर्यन्मत्स्यजीविभिरभिहितम् ? तद्रात्रावपि गम्यतां किञ्चिन्निकटं सरः, उक्तञ्च—

---

१. बहुजलमित्यर्थः । २. अग्रभागयोः । ३. सम्यग्धृत्वेत्यर्थः । ४. तूष्णीम्भावेन । ५. नीचैः स्थितम् । ६. मत्स्यार्थं जालं निपात्य नालोडित इति भावः । ७. भोजनरूपकार्यनिर्वाहः । ८. वज्रप्रहारतुल्यमतिकठोरमिति यावत् ।

अशक्तैर्बलिनः शत्रोः कर्तव्यं प्रपलायनम् ।
संश्रितव्योऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥ २६९ ॥

तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसंक्षयं करिष्यन्ति । एतन्मम मनसि वर्तते । तन्न युक्तं साम्प्रतं क्षणमप्यत्रावस्थातुम् । उक्तञ्च—

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा ।
ते न पश्यन्ति विद्वांसो देहभङ्गं कुलक्षयम् ॥ २७० ॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह—अहो सत्यमभिहितं भवता । ममाप्यभीष्टमेतत् । तदन्यत्र गम्यताम् इति । उक्तञ्च—

परदेशभयाद्भीता बहुमाया नपुंसकाः ।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥ २७१ ॥

यस्यास्ति सर्वत्र गतिः स कस्मात्स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति ॥ २७२ ॥

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच—अहो न भवद्भ्यां [1]मन्त्रितं सम्यगेतदिति, यतः किं [2]वाङ्मात्रेणापि तेषां [3]पितृपैतामहिकमेतत्सरस्त्यक्तुं युज्यते । यदि [4]आयुःक्षयोऽस्ति तदन्यत्र गतानामपि मृत्युर्भविष्यत्येव । उक्तञ्च—

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ २७३ ॥

तदहं न यास्यामि । भवद्भ्यां च यत्प्रतिभाति तत्कर्तव्यम् । अथ तस्य तं निश्चयं ज्ञात्वानागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन । अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह तत्सरो निर्मत्स्यतां नीतम् । अतोऽहं ब्रवीमि—'अनागतविधाता च' इति । तच्छ्रुत्वा टिट्टिभ आह—भद्रे ! किं मां यद्भविष्यसदृशं [5]सम्भावयसि । तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं स्वचञ्च्वा शोषयामि । टिट्टिभ्याह—अहो कस्ते समुद्रेण सह विग्रहः । तन्न युक्तमस्योपरि कोपं कर्तुम् । उक्तञ्च—

---

१. विचारितम् । २. कथनमात्रेणैवेत्यर्थः । ३. पितृपितामहक्रमायातं कुलपरम्परागतमिति यावत् । ४. जीवनकालो नास्तीत्यर्थः । ५. जानासि ।

पुंसामसमर्थानामुपद्रवायात्मनो भवेत्कोपः।
पिठरं ज्वलदतिमात्रं निजपार्श्वानेव दहतितराम् ॥ २७४ ॥

तथा च—अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ २७५ ॥

टिट्टिभ आह—प्रिये! मा मैवं वद। येषाम् [1]उत्साहशक्तिर्भवति ते स्वल्पा अपि [2]गुरून्विक्रमन्ते। उक्तञ्च—

विशेषात्परिपूर्णस्य याति शत्रोरमर्षणः।
आभिमुख्यं शशाङ्कस्य यथाद्यापि विधुन्तुदः ॥ २७६ ॥

तथा च—प्रमाणादधिकस्यापि गण्डश्यामसदच्युतेः।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ २७७ ॥

तथा च—बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम्।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ २७८ ॥

हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशः
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः।
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरि-
स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥ २७९ ॥

तदनया चञ्च्वास्य सकलं तोयं [3]शुष्कस्थलतां नयामि। टिट्टिभ्याह—भोः कान्त! यत्र जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति तथा [4]सिन्धुश्च, तत्कथं त्वमष्टादशनदीशतैः पूर्यमाणं तं [5]विप्रुषवाहिन्या चञ्च्वा शोषयिष्यसि। तत्किमश्रद्धेयेनोक्तेन। टिट्टिभ आह—प्रिये!

अनिर्वेदः श्रियो मूलं चञ्चूर्मे लोहसन्निभा।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति ॥ २८० ॥

दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम्।
जयति तुलामधिरूढो भास्वानपि जलपटलानि ॥ २८१ ॥

टिट्टिभ्याह—'यदि त्वयावश्यं समुद्रेण सह विग्रहानुष्ठानं कार्यम्,

---

१. पराक्रमादिनोन्नतीच्छेत्यर्थः। २. बलवतोऽपि पराजयन्त इत्यर्थः। ३. शोषयामीत्यर्थः। ४. तदाख्यः कोऽपि नदविशेषः। ५. जलबिन्दुधारिण्या।

तदन्यानपि [1]विहङ्गमानाहूय सुहृज्जनसहित एवं समाचर। उक्तञ्च—

बहूनामप्यसाराणां समवायो हि दुर्जयः।
तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बद्ध्यते॥ २८२॥

तथा च—चटका काष्ठकूटेन मक्षिका दर्दुरस्तथा।
महाजनविरोधेन कुञ्जरः प्रलयं गतः॥ २८३॥

टिट्टिभ आह—कथमेतत्। सा प्राह—

## कथा ( १२ )

कस्मिंश्चिद्वनोद्देशे चटकदम्पती [2]तमालतरुकृतनिलयौ प्रतिवसतः स्म। अथ तयोर्गच्छता कालेन सन्ततिरभवत्। अन्यस्मिन्नहनि प्रमत्तो वनगजः कश्चित्तं तमालवृक्षं [3]घर्मार्तश्छायार्थी समाश्रितः। ततो [4]मदोत्कर्षात्तां तस्य शाखां चटकाश्रितां [5]पुष्कराग्रेणाकृष्य बभञ्ज। तस्या भङ्गेन चटकाण्डानि सर्वाणि [6]विशीर्णानि। आयुःशेषतया च चटकौ कथमपि प्राणैर्न वियुक्तौ। अथ चटका [7]स्वाण्डभङ्गाभिभूता [8]प्रलापान्कुर्वाणा न किञ्चित्सुखमाससाद। अत्रान्तरे तस्यास्तान्प्रलापाञ्श्रुत्वा काष्ठकूटो नाम पक्षी तस्याः परमसुहृत्तद्दुःखदुःखितोऽभ्येत्य तामुवाच—भगवति! किं वृथा प्रलापेन।

उक्तञ्च—नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः।
पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः॥ २८४॥

तथा च—अशोच्यानीह भूतानि यो मूढस्तानि शोचति।
स दुःखे लभते दुःखं द्वावनर्थौ निषेवते॥ २८५॥

अन्यच्च—श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
तस्मान्न रोदितव्यं हि क्रियाः कार्याश्च शक्तितः॥ २८६॥

चटका प्राह—अस्त्वेतत्। परं दुष्टगजेन [9]मदान्मम सन्तानक्षयः कृतः। यद्यदि मम त्वं सुहृत्सत्यस्तदस्य "[10]गजापसदस्य कोऽपि वधोपायश्चिन्त्यताम्, यस्यानुष्ठानेन मे सन्ततिनाशदुःखमपसरति[11]"। उक्तञ्च—

---

१. पक्षिणः। २. तमालवृक्षकृतनीडौ। ३. आतपसन्तप्तः। ४. मदातिरेकात्। ५. शुण्डाया अग्रभागेन। ६. भग्नानि। ७. निजाण्डविनाशदुःखिता। ८. रुदन्तीत्यर्थः। ९. बलाभिमानादित्यर्थः। १०. दुष्टगजस्य। ११. नश्यति

आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥ २८७ ॥

काष्ठकूट आह—भगवति ! सत्यमभिहितं भवत्या । उक्तञ्च—

स सुहृद् व्यसने यः स्यादन्यजात्युद्भवोऽपि सन् ।
वृद्धौ सर्वोऽपि मित्रं स्यात्सर्वेषामेव देहिनाम् ॥ २८८ ॥
स सुहृद् व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् ।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ २८९ ॥

तत्पश्य मे बुद्धिप्रभावम् । परं ममापि सुहृद्भूता वीणारवा नाम मक्षिकास्ति । तत्तामाहूयागच्छामि, [1]येन स दुरात्मा दुष्टगजो वध्यते । अथासौ चटकया सह मक्षिकामासाद्य प्रोवाच—भद्रे ! मम [2]इष्टेयं चटका केनचिद् दुष्टगजेन [3]पराभूताण्डस्फोटनेन । तत्तस्य वधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि । मक्षिकाप्याह—भद्र ! किमुच्यतेऽत्र विषये । उक्तञ्च—

पुनः प्रत्युपकाराय मित्राणां क्रियते प्रियम् ।
यत्पुनर्मित्रमित्रस्य कार्यं मित्रैर्न किं कृतम् ॥ २९० ॥

सत्यमेतत् । परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति । तमप्याहूय यथोचितं कुर्मः । उक्तञ्च—

हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः ।
कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥ २९१ ॥

अथ ते त्रयोऽपि गत्वा मेघनादस्याग्रे समस्तमपि वृत्तान्तं निवेद्य तस्थुः । अथ स प्रोवाच—[4]कियन्मात्रोऽसौ वराको गजो [5]महाजनस्य कुपितस्याग्रे तन्मदीयो मन्त्रः कर्तव्यः । मक्षिके ! त्वं गत्वा मध्याह्नसमये तस्य मदोद्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु येन स [6]श्रवणसुखलालसो [7]निमीलितनयनो भवति । ततश्च काष्ठकूटचञ्च्वा स्फोटितनयनोऽन्धीभूतस्तृषार्तो मम [8]गर्ततटाश्रितस्य

---

१. मक्षिकाया आगमनेन हेतुनेत्यर्थः २. मित्रभूता । ३. पीडिता । ४. अतितुच्छ इति भावः । ५. प्रबलस्येति तात्पर्यम् । ६. सुमधुरशब्दश्रवणोत्सुकः । ७. मुद्रितचक्षुः । ८. गर्तसमीपस्थितस्य ।

[1]सपरिकरस्य शब्दं श्रुत्वा जलाशयं मत्वा [2]समभ्येति। ततो गर्त-मासाद्य पतिष्यति, पञ्चत्वं यास्यति चेति। एवं समवायः कर्तव्यो यथा वैरसाधनं भवति। अथ तथानुष्ठिते स मत्तगजो [3]मक्षिकागेय-सुखान्निमीलितनेत्रः काष्ठकूटहृतचक्षुर्मध्याह्नसमये भ्राम्यन्मण्डूकशब्दा-नुसारी गच्छन्महतीं गर्तामासाद्य पतितो मृतश्च। अतोऽहं ब्रवीमि—'चटका काष्ठकूटेन' इति। टिट्टिभ आह—भद्रे ! एवं भवतु, सुहृद्वर्गस-मुदायेन समुद्रं शोषयिष्यामि। इति निश्चित्य बकसारसमयूरादीन्स-माहूय प्रोवाच—भोः पराभूतोऽहं समुद्रेणाण्डकापहारेण। तच्चिन्त्यता-मस्य शोषणोपायः। ते सम्मन्त्र्य प्रोचुः—अशक्ता वयं समुद्रशोषणे। तत्किं वृथाप्रयासेन ! उक्तञ्च—

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः।
युद्धार्थं स निवर्तेत शीर्णदन्तो गजो यथा॥ २६२॥

तदस्माकं स्वामी वैनतेयोऽस्ति। तत्तस्मै सर्वमेतत्परि[4]भवस्थानं निवेद्यताम्, येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति। अथवा-त्रा[5]वलेपं करिष्यति तथापि नास्ति वो दुःखम्। उक्तञ्च—

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति॥ २६३॥

[6]तद्यामो वैनतेयसकाशं यतोऽसावस्माकं स्वामी। तथानुष्ठिते सर्वे ते पक्षिणो [7]विषण्णवदनाः बाष्पपूरितदृशो वैनतेयसकाशमासाद्य करु-णस्वरेण [8]फूत्कर्तुमारब्धाः—अहो [9]अब्रह्मण्यमब्रह्मण्यम्। अधुना [10]सदा-चारस्य टिट्टिभस्य भवति नाथे सति समुद्रेणाण्डान्यपहृतानि, तत्प्र-नष्टमधुना पक्षिकुलम्। अन्येऽपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते। उक्तञ्च—

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम्।
गतानुगतिको लोको न लोकः पारमार्थिकः॥ २६४॥

---

१. सहचरसहितस्य। २. आगमिष्यतीति यावत्। ३. मक्षिकाशब्दजनित-सुखादित्यर्थः। ४. कष्टवृत्तान्तः इत्यर्थः। ५. अहङ्कारम्। ६. गच्छामः। ७. अत्यन्तदुःखिता इति यावत्। ८. विलपितुमित्यर्थः। ९. महाननर्थो जात इति भावः। १०. सज्जनस्य।

तथा च—चाटुतस्करदुर्वृत्तैस्तथा साहसिकादिभिः ।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥ २९५ ॥
प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः ।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ २९६ ॥
प्रजापीडनसन्तापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ २९७ ॥
राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ २९८ ॥
फलार्थी पार्थिवो लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ २९९ ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ ३०० ॥
हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किञ्चित्प्रजाभ्यः स्यान्नृपस्य तत् ॥ ३०१ ॥

अथैवं गरुडः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत्—अहो सत्यमुक्तमेतैः पक्षिभिः । तदद्य गत्वा तं समुद्रं शोषयामः । एवं चिन्तयतस्तस्य विष्णुदूतः समागत्याह—भो गरुत्मन् ! भगवता नारायणेनाहं तव पार्श्वे प्रेषितः । देवकार्याय भगवानमरावत्यां यास्यतीति तत्सत्वरमागम्यताम् तच्छ्रुत्वा गरुडः साभिमानं प्राह—भो दूत ! किं मया कुभृत्येन भगवान् करिष्यति । तद्गत्वा तं वद यदन्यो भृत्यो वाहनायास्मत्स्थाने क्रियताम् । मदीयो नमस्कारो वाच्यो भगवतः । उक्तञ्च—

यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः ।
न हि तस्मात्फलं किंचित्सुकृष्टादूषरादिव ॥ ३०२ ॥

दूत आह—भो वैनतेय ! कदाचिदपि भगवन्तं प्रति त्वया नैतदभिहितमीदृक् तत्कथय किं ते भगवता [1]अपमानस्थानं कृतम् । गरुड आह—'भगवदाश्रयभूतेन समुद्रेणास्मट्टिट्टिभाण्डान्यपहृतानि । तद्यदि

१. अनिष्टमित्यर्थः ।

तस्य [1]निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः। तद्द्रुततरं गत्वा भवता भगवतः समीपे वक्तव्यम्। अथ दूतमुखेन प्रणयकुपितं वैनतेयं विज्ञाय भगवांश्चिन्तयामास—अहो [2]स्थाने कोपो वैनतेयस्य। तत्स्वयमेव गत्वा संमानपुरःसरं तमानयामि।

उक्तञ्च—भक्तं शक्तं कुलीनं च न भृत्यमपमानयेत्।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रियमात्मनः॥ ३०३॥

अन्यच्च—राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति।
ते तु संमानितास्तस्य प्राणैरप्युपकुर्वते॥ ३०४॥

इत्येवं संप्रधार्य [3]रुक्मपुरे वैनतेयसकाशं सत्वरमगमत्। वैनतेयोऽपि गृहागतं भगवन्तमवलोक्य [4]त्रपाधोमुखः प्रणम्योवाच—भगवन्! त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्याण्डान्यपहृत्य समापमानं विहितम्। परं [5]भगवल्लज्जया मया विलम्बितम्। नोचेदेनमहं [6]स्थलान्तमद्यैव नयामि। स्वामिभयाच्छुनोपि प्रहारो न दीयते।

उक्तञ्च—येन स्याल्लघुता वाऽथ पीडा चित्ते प्रभोः क्वचित्।
प्राणत्यागेऽपि तत्कर्म न कुर्यात्कुलसेवकः॥ ३०५॥

तच्छ्रुत्वा भगवानाह—भो वैनतेय! सत्यमभिहितं भवता।

उक्तञ्च—

भृत्यापराधजो दण्डः स्वामिनो जायते यतः।
तेन लज्जापि तस्योत्था न भृत्यस्य तथा पुनः॥ ३०६॥

तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं [7]सम्भावयावः। अमरावतीं च गच्छावः। तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं सन्धायाभिहितः—भो दुरात्मन्! दीयतां टिट्टिभाण्डानि। नो चेत्स्थलतां त्वां नयामि। ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि। टिट्टिभेनापि भार्यायै समर्पितानि। अतोहं ब्रवीमि—

---

१. दण्डम्। २. युक्त उचित इति यावत्। ३. तन्नाम्नि नगरे। ४. लज्जावनतमुखः। ५. भगवदाश्रितोऽसौ तस्यापमानेन भगवतोऽपि लज्जा स्यादिति त्रासेनेति भावः। ६. स्थलमात्रावशेषतां नयामि शोषयामीत्यर्थः। ७. सत्कुर्वोऽनुनयावहति भावः।

शत्रोर्बलमविज्ञाय' इति। तस्मात्पुरुषेणोद्यमो न त्याज्यः। तदाकर्ण्य सञ्जीवकस्तमेव भूयोऽपि पप्रच्छ—भो मित्र! कथं ज्ञेयो मयासौ दुष्टबुद्धिरिति। इयन्तं कालं यावदुत्तरोत्तरस्नेहेन प्रसादेन चाहं दृष्टः। न कदाचित्तद्विकृतिर्दृष्टा, तत्कथ्यतां येनाहमात्मरक्षार्थं तद्वधायोद्यमं करोमि। दमनक आह—भद्र! किमत्र ज्ञेयम्। एष ते [1]प्रत्ययः। यदि रक्तनेत्रस्त्रिशिखां भ्रुकुटिं दधानः [2]सृक्किणी परिलेलिहन् त्वां दृष्ट्वा भवति, तद् दुष्टबुद्धिः। अन्यथा [3]सुप्रसादश्चेति। तदाज्ञापय माम्। स्वाश्रयं प्रति गच्छामि। त्वया च यथायं [4]मन्त्रभेदो न भवति तथा कार्यम्। यदि निशामुखं प्राप्य गन्तुं शक्नोषि [5]तद्देशत्यागः कार्यः, यतः—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ३०७॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥ ३०८॥

बलवताभिभूतस्य विदेशगमनं [6]तदनुप्रवेशो वा नीतिः। तद्देशत्यागः कार्यः। अथवात्मा [7]सामादिभिरुपायैरभिरक्षणीयः।

उक्तञ्च—अपि पुत्रकलत्रैर्वा प्राणान् रक्षेत पण्डितः।
विद्यमानैर्यतस्तैः स्यात्सर्वं भूयोपि देहिनाम्॥ ३०९॥

तथा च—येन केनाप्युपायेन शुभेनाप्यशुभेन वा।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्॥ ३१०॥
यो मायां कुरुते मूढः प्राणत्यागे धनादिषु।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत्॥ ३११॥

एवमभिधाय दमनकः करटकसकाशमगमत्। करटकोऽपि तमायान्तं दृष्ट्वा प्रोवाच—'भद्र! किं कृतं तत्र भवता।' दमनक आह—'मया

---

१. विश्वासहेतुः प्रमाणमित्यर्थः। २. ओष्ठप्रान्तौ पुनः पुनर्लिहन्। ३. प्रसन्नश्चेति भावः। ४. रहस्यभेदः। ५. तस्य देशः परित्याज्य इति यावत्। ६. तस्य बलवतोऽनुप्रवेशः शरणग्रहणमित्यर्थः। ७. साम=सन्धिः, तत् आदिर्येषां ते सामादयः सामदामभेददण्डास्तैः।

तावन्नीतिबीजनिर्वापणं[1] कृतम्, परतो दैवविहितायत्तम्।
उक्तञ्च यतः—पराङ्मुखेऽपि दैवेऽत्र कृत्यं कार्यं विपश्चिता।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च॥ ३१२॥

तथा च—उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥ ३१३॥

करटक आह—'तत्कथय कीदृक् त्वया नीतिबीजं निर्वापितम्?' सोऽब्रवीत्—'मयाऽन्योन्यं ताभ्यां [2]मिथ्याप्रजल्पनेन [3]भेदस्तथा विहितो यथा भूयोऽपि मन्त्रयन्तावेकस्थानस्थितौ न द्रक्ष्यसि। करटक आह—अहो न युक्तं भवता विहितं यत्परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ [4]कोपसागरे प्रक्षिप्तौ। उक्तञ्च—

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत्।
जन्मजन्मान्तरं दुःखी स नरः स्यादसंशयम्॥ ३१४॥

अपरं त्वं यद् भेदमात्रेणापि तुष्टस्तदप्ययुक्तम्, यतः सर्वोऽपि जनो [5]विरूपकरणे समर्थो भवति नोपकर्तुम्। उक्तञ्च—

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम्।
पातयितुमस्ति शक्तिर्वायोर्वृक्षं न चोन्नमितुम्॥ ३१५॥

दमनक आह—अनभिज्ञो भवान्नीतिशास्त्रस्य, तेनैतद् ब्रवीति। उक्तञ्च यतः—

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते॥ ३१६॥

तच्छत्रुभूतोऽयमस्माकं [6]मन्त्रिपदापहरणात्। उक्तञ्च—
पितृपैतामहं स्थानं यो यस्यात्र जिगीषते।
स तस्य सहजः शत्रुरुच्छेद्योऽपि प्रिये स्थितः॥ ३१७॥

१. नीतयो बीजानीव तन्निर्वापणं नीतिः प्रयुक्तेत्यर्थः। २. अमृतकथनेन कपटचातुर्येणेति यावत्। ३. उपजापो मनोभङ्ग इत्यर्थः। ४. विपदं प्रापिताविति भावः। ५. अनिष्टकरणे। ६. मन्त्रिपदाच्च्यावनादिति भावः।

तन्मया स उदासीनतया समानीतोऽभयप्रदानेन यावत्तावदहमपि तेन साचिव्यात्प्रच्यावितः।

तेन मया तस्योपरि वधोपाय एष विरच्यते। देशत्यागाय वा भविष्यति। तच्च त्वां मुक्त्वान्यो न ज्ञास्यति। तद्युक्तमेतत् [1]स्वार्थायानुष्ठितम्। उक्तञ्च यतः—

निस्त्रिंशं हृदयं कृत्वा वाणीं क्षुरसमोपमाम्।
विकल्पोऽत्र न कर्त्तव्यो हन्यात्तत्रापकारिणम्॥ ३१८॥

अपरं, मृतोऽप्यस्माकं भोज्यो भविष्यति। तदेकं [2]तावद्वैरसाधनम्, अपरं [3]साचिव्यञ्च भविष्यति [4]तृप्तिश्च, इति। तद्गुणत्रयेऽस्मिन्नुपस्थिते कस्मान्मां दूषयसि त्वं [5]जाड्यभावात्? उक्तञ्च—

परस्य पीडनं कुर्वन्स्वार्थसिद्धिं च पण्डितः।
मूढबुद्धिर्न भक्षेत वने चतुरको यथा॥ ३१९॥

करटक आह—कथमेतत्। स आह—

## कथा (१३)

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः। तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रतिवसतः। अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा प्रसववेदनया स्वयूथाद् भ्रष्टोष्ट्री उपविष्टा कस्मिंश्चिद् [6]वनगहने समासादिता। अथ तां व्यापाद्य यावत् उदरं [7]स्फोटयति, [8]तावज्जीवँल्लघुदासेरकशिशुः निष्क्रान्तः। सिंहोऽपि [9]दासेरक्याः [10]पिशितेन सपरिवारः परां तृप्तिमुपागतः। परं स्नेहाद्बालदासेरकं त्यक्तं गृहमानीयेदमुवाच—'भद्र! न तेऽस्ति मृत्योर्भयं मत्तो नान्यस्मादपि, ततः स्वेच्छयात्र वने भ्राम्यताम्' इति। यतस्ते शङ्कुसदृशौ कर्णौ ततः शङ्कुकर्णो नाम भविष्यति। एवमनुष्ठिते चत्वारोऽपि त एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति। शङ्कुकर्णोऽपि

---

१. स्वार्थसाधनाय कृतमित्यर्थः। २. वैरनिर्यातनं प्रतिहिंसनमित्यर्थः। ३. मन्त्रिपदप्राप्तिरिति भावः। ४. भोजनलाभेन मनसस्तुष्टिश्चेति यावत्। ५. अज्ञानवशादित्यर्थः। ६. सघने वन इत्यर्थः। ७. विदारयति। ८. उष्ट्रशावकः। ९. उष्ट्र्याः। १०. मांसेन।

[1]यौवनपदवीमारूढः क्षणमपि न तं सिंहं मुञ्चति। अथ कदाचिद्वज्रदंष्ट्रस्य केनचिद्वन्येन मत्तगजेन सह युद्धमभवत्। तेन मदवीर्यात्स दन्तप्रहारैस्तथा क्षतशरीरो विहितो यथा प्रचलितुं न शक्नोति। तदा क्षुत्क्षामकण्ठस्तान्प्रोवाच—भोः अन्विष्यताम् किञ्चित्सत्त्वं येनाहमेवंस्थितोऽपि तं व्यापाद्यात्मनो युष्माकं च [2]क्षुत्प्रणाशं करोमि। तच्छ्रुत्वा ते त्रयोऽपि वने सन्ध्याकालं यावद् भ्रान्ताः परं न किञ्चित्सत्वमासादितम्। अथ चतुरकश्चिन्तयामास—यदि शङ्कुकर्णोऽयं व्यापाद्यते ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति। परं नैनं स्वामी मित्रत्वाद् [3]आश्रयसमाश्रितत्वाच्च विनाशयिष्यति। अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये यथा व्यापादयिष्यति। उक्तञ्च—

अवध्यं चाथवागम्यमकृत्यं नास्ति किञ्चन।
लोके बुद्धिमतां बुद्धेस्तस्मात्तां विनियोजयेत् ॥ ३२० ॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह—भोः शङ्कुकर्ण! स्वामी तावत्पथ्यं विना क्षुधया परिपीड्यते। स्वाम्यभावादस्माकपि ध्रुवं विनाश एव। ततो वाक्यं किञ्चित्स्वाम्यर्थे वदिष्यामि। तच्छ्रूयताम्। शङ्कुकर्ण आह—भोः शीघ्रं निवेद्यतां येन ते वचनं शीघ्रं [4]निर्विकल्पं करोमि। अपरं स्वामिनो हिते कृते मया [5]सुकृतशतं कृतं भविष्यति। अथ चतुरक आह—भो भद्र! आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ येन ते द्विगुणं शरीरं भवति, स्वामिनः पुनः प्राणयात्रा भवति। तदाकर्ण्य शङ्कुकर्णः प्राह—भद्र! यद्येवं तन्मदीयप्रयोजनमेतदुच्यतां स्वाम्यर्थः क्रियतामिति। परमत्र धर्मः [6]'प्रतिभूः।' इति ते विचिन्त्य सर्वे सिंहसकाशमाजग्मुः। ततश्चतुरक आह—'देव! न किञ्चित्सत्वं प्राप्तम्! भगवानादित्योऽप्यस्तं गतः। तद्यदि स्वामी द्विगुणं शरीरं प्रयच्छति ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति धर्मप्रतिभुवा।' सिंह आह—भोः यद्येवं तत्सुन्दरतरम्।

१. तरुणताङ्गत इत्यर्थः। २. बुभुक्षानिवृत्तिम्। ३. शरणागतत्वाद् गृहागतत्वाद्वा। ४. निःसंशयम्। ५. बहुपुण्यमित्यर्थः। ६ विश्वासकारणीभूतः (जामिन) इति भाषायाम्।

व्यवहारस्यास्य धर्मः प्रतिभूः क्रियताम्[1] इति। अथ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपागतः। अथ वज्रदंष्ट्रश्चतुरकमाह—भोः चतुरक! यावदहं नदीं गत्वा स्नानं, देवार्चनविधिं कृत्वा आगच्छामि, तावत्त्वयात्राप्रमत्तेन भाव्यम्' इत्युक्त्वा नद्यां गतः। अथ तस्मिन् गते चतुरकश्चिन्तयामास—'कथं ममैकाकिनो भोज्योऽयमुष्ट्रो भविष्यति' इति विचिन्त्य क्रव्यमुखमाह—भोः क्रव्यमुख! क्षुधालुर्भवान्, तद्यावदसौ स्वामी नागच्छति तावत्त्वमस्योष्ट्रस्य मांसं भक्षय। अहं त्वां स्वामिनो निर्दोषं प्रतिपादयिष्यामि। सोऽपि तच्छ्रुत्वा यावत्किञ्चिन्मांसमास्वादयति तावच्चतुरकेणोक्तम्—भोः क्रव्यमुख! समावगच्छति स्वामी तत्त्यक्त्वैनं दूरे तिष्ठ येनास्य भक्षणं न[2] विकल्पयति। तथानुष्ठिते सिंहः समायातो यावदुष्ट्रं पश्यति[3] तावद्रिक्तीकृतहृदयो दासेरकः। ततो भ्रुकुटिं कृत्वा[4] परुषतरमाह—अहो केनैष उष्ट्र उच्छिष्टतां नीतो येन तमपि व्यापादयामि। एवमभिहिते क्रव्यमुखश्चतुरकमुखमवलोकयति किल। तद्वद किञ्चिद्येन मम शान्तिर्भवति। अथ चतुरको विहस्योवाच—भोः मामनादृत्य पिशितं भक्षयित्वाऽधुना मन्मुखमवलोकयसि! तदास्वादय तस्य[5] दुर्णयतरोः फलम्' इति। तदाकर्ण्य क्रव्यमुखो जीवनाशभयाद् दूरदेशं गतः। एतस्मिन्नन्तरे तेन मार्गेण[6] दासेरकसार्थो[7]भाराक्रान्तः समायातः। 'तस्याग्रेसरोष्ट्रस्य कण्ठे महती घण्टा बद्धा तस्याः शब्दं दूरतोऽप्याकर्ण्य सिंहो जम्बुकमाह—भद्र! ज्ञायतां किमेष रौद्रः शब्दः श्रूयतेऽश्रुतपूर्वः। तच्छ्रुत्वा चतुरकः किञ्चिद्वनान्तरं गत्वा सत्वरमभ्युपेत्य प्रोवाच —'स्वामिन्! गम्यतां गम्यतां यदि शक्नोपि गन्तुम्।' सोऽब्रवीत्—भद्र! किमेवं मां[9] व्याकुलयसि, तत्कथय किमेतन्' इति। चतुरक आह—'स्वामिन्! एष धर्मराजस्तवोपरि कुपितः यदनेनाकाले दासेरकोऽयं मदीयो व्यापादितः। तत्सहस्रगुणमुष्ट्रमस्य सकाशाद् ग्रही-

---

१. सावधानेन रक्षणपरेणेति भावः २. संशयं करोति। ३. वृकेण भक्षितहृत्पिण्ड इति यावत्। ४. सकर्कशस्वरं यथा तथेत्यर्थः। ५. दुष्कृतफलमिति भावः। ६. उष्ट्रयूथम्। ७. घृतभारः। ८. अग्रगामिन उष्ट्रस्येत्यर्थः। ९. उद्विग्नं करोषि।

ष्यामि' इति निश्चित्य[1] बृहन्मानामादायाग्रेसरस्योष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा[2] वध्यदासेरकसक्तानपि पितृपितामहानादाय वैरनिर्यातनार्थमायात एव। सिंहोऽपि तच्छ्रुत्वा सर्वतो दूरादेवावलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात्प्रणष्टः। चतुरकोपि शनैः शनैस्तस्योष्ट्रस्य मांसं भक्षयामास। अतोऽहं ब्रवीमि—'परस्य पीडनं कुर्वन्' इति। अथ दमनके गते संजीवकश्चिन्तयामास—'अहो किमेतन्मया कृतम्, [3]यच्छष्पादोऽपि मांसाशिनस्तस्यानुगः संवृत्तः। अथवा साध्विदमुच्यते—

अगम्यान्यः पुमान्याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ३२१॥

तत्किं करोमि। क्व गच्छामि। कथं मे शान्तिर्भविष्यति। अथवा तमेव पिङ्गलकं गच्छामि कदाचिन्मां शरणागतं रक्षति। प्राणैर्न वियोजयति। यत उक्तञ्च—

धर्मार्थं यततामपीह विपदो दैवाद्यदि स्युः क्वचि-
त्तत्तासामुपशान्तये सुमतिभिः कार्यो विशेषान्नयः।
लोके ख्यातिमुपागताऽत्र सकले लोकोक्तिरेषा यतो
दग्धानां किल वह्निना हितकरः सेकोऽपि तस्योद्भवः॥ ३२२॥

तथा च—लोकेऽथवा तनुभृतां निजकर्मपाकं
नित्यं समाश्रितवतां सुहितक्रियाणाम्।
भावार्जितं शुभमथाप्यशुभं निकामं
यद्भावि तद्भवति नात्र विचारहेतुः॥ ३२३॥

अपरं चान्यत्र गतस्यापि मे कस्यचिदुग्रसत्त्वस्य मांसाशिनः सकाशान्मृत्युर्भविष्यति। तद्वरं सिंहात्। उक्तञ्च—

महद्भिः स्पर्धमानस्य विपदेव गरीयसी।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे॥ ३२४॥

तथा च—महतोपि क्षयं लब्ध्वा श्लाघ्यं नीचोऽपि गच्छति।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः॥ ३२५॥

---

१. महतिमीत्यर्थः २. निहतोष्ट्रसम्बन्धिनः। ३. तृणभोजी।

एवं निश्चित्य स स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयं पश्यन्नपठत्—अहो साध्विदमुच्यते—

अन्तर्लीनभुजङ्गमं गृहमिव व्यालाकुलं वा वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः।
नानादुष्टजनैरसत्यवचनासक्तैरनार्यैर्वृतं
दुःखेन प्रतिगम्यते प्रचकितै राज्ञां गृहं वार्धिवत्॥ ३२६॥

एवं पठन् दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा [1]प्रचकितः [2]संवृतशरीरो दूरतरं [3]प्रणामकृतिं विनाप्युपविष्टः। पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्दधानः कोपात्तस्योपरि पपात। अथ संजीवकः [4]खरनखरविकर्तितपृष्ठः शृङ्गाभ्यां तदुदरम् [5]उल्लिख्य कथमपि तस्मादपेतः[6] शृङ्गाभ्यां हन्तुमिच्छन्युद्धायावस्थितः। अथ द्वावपि तौ [7]पुष्पितपलाशप्रमितौ परस्परवधकाङ्क्षिणौ दृष्ट्वा करटको दमनकमाह—भो मूढमते! अनयोर्विरोधं वितन्वता त्वया साधु न कृतम्। न च त्वं नीतितत्त्वं वेत्सि। नीतिविद्भिरुक्तञ्च—

कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै-
स्तेषां दुर्णयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम्॥ ३२७॥

तदपि [8]स्वाम्यभिघातो भविष्यति तत्किं त्वदीयमन्त्रबुद्ध्या क्रियते। अथ संजीवको न वध्यते तथाऽप्यभव्यम्[9]। यतः प्राणसंदेहात्तस्य च वधः। तन्मूढ! कथं त्वं मन्त्रिपदमभिलषसि [10]सामसिद्धिं न वेत्सि। तद् वृथा मनोरथोऽयं ते दण्डरुचेः। उक्तञ्च—

सामादिदण्डपर्यन्तो नयः प्रोक्तः स्वयंभुवा।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत्॥ ३२८॥

---

१. भीतः। २. भयेन संकोचितावयवः। ३. नमस्कारम्। ४. खरैर्नखरैस्तीक्ष्णैर्नखैर्विकर्तितं विदारितं पृष्ठं यस्य सः। ५. उद्घृष्य आहत्येत्यर्थः। ६. दूरं स्थितः सन्निति भावः। ७. रुधिरानुलिप्तगात्राविति यावत्। ८. प्रभोर्विनाशः। ९. अनुचितम्। १० सन्धिना कार्यसिद्धिम्।

तथा च—साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ? ॥ ३२९ ॥

तथा च—आदौ साम प्रयोक्तव्यं पुरुषेण विजानता ।
सामसाध्यानि कार्याणि विक्रियां यान्ति न क्वचित् ॥ ३३० ॥
न चन्द्रेण न चौषध्या न सूर्येण न वह्निना ।
साम्नैव विलयं याति विद्वेषिप्रभवं तमः ॥ ३३१ ॥

तथा यत्त्वं मन्त्रित्वमभिलषसि, तदप्ययुक्तम् । यतस्त्वं मन्त्रिगतिं न वेत्सि । पञ्चविधो हि मन्त्रः । स च [1]कर्मणामारम्भोपायः, [2]पुरुषद्रव्यसम्पत्, [3]देशकालविभागः, [4]विनिपातप्रतीकारः, [5]कार्यसिद्धिश्चेति । सोऽयं स्वाम्यमात्ययोरेकतमस्य किं वा द्वयोरपि [6]विनिपातः संमुत्पद्यते लग्नः । तद्यदि काचिच्छक्तिरस्ति तद्विचिन्त्यतां विनिपातप्रतीकारः । [7]भिन्नसन्धाने हि मन्त्रिणां बुद्धिपरीक्षा । तन्मूर्ख ! तत्कर्तुमसमर्थस्त्वं यतो विपरीतबुद्धिरसि । उक्तञ्च—

मन्त्रिणां भिन्नसंधाने भिषजां सान्निपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ३३२ ॥

अन्यच्च —घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ३३३ ॥

अथवा न ते दोषोऽयम् । स्वामिनो दोषः, यस्ते वाक्यं श्रद्दधाति । उक्तञ्च—

नराधिपा नीचजनानुवर्तिनो बुधोपदिष्टेन पथा न यान्ति ये ।
विशन्ति ते दुर्गममार्गनिर्गमं समस्तसम्बाधमनर्थपिञ्जरम् ॥ ३३४ ॥

तद्यदि त्वमस्य मन्त्री भविष्यसि तदान्योऽपि कश्चिन्नास्य समीपे साधुजनः समेष्यति । उक्तञ्च—

---

१. सन्धिविग्रहादीनां प्रयोगनैपुण्यम् । २. कर्मचारिणां धनानाञ्च समृद्धिकरणम् । ३. अत्र स्थाने सामप्रयोगः, अत्र समये च दण्डस्य प्रयोग इत्येवमादिना देशकालयोः व्यवस्थाकरणम् । ४. विनिपातो नाम कार्यहानिस्तस्य प्रतीकारः । स पुनर्यथा नापतेत्तथा कार्यकरणम् । ५. सन्धिप्रभृतीनामुपायानां कार्यानुगुणं फलसमर्पकत्वम् । ६. द्वयोरपि विनाश उपस्थित इत्यर्थः । ७. अशक्यसाधने कर्मणीत्यर्थः ।

गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ३३५ ॥

तथा शिष्टजनरहितस्य स्वामिनोऽपि नाशो भविष्यति। उक्तञ्च—चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ३३६ ॥

तत्किं मूर्खोपदेशेन? केवलं दोष एव न गुणः। उक्तञ्च—
नानाम्यं नमते दारु नाश्मनि स्यात्क्षुरक्रिया।
सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥ ३३७ ॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

## कथा (१४)

अस्ति कस्मिंश्चित्पर्वतैकदेशे वानरयूथम्। तच्च कदाचिद्धेमन्तसमये [1]अतिकठोरवातसंस्पर्शवेपमानकलेवरं [2]तुषारवर्षोद्धतप्रवर्षघनधारानिपातसमाहतं न कथञ्चिच्छान्तिमगमत्। अथ केचिद्वानरा वह्निकणसदृशानि गुञ्जाफलान्यवचित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात्तस्थुः। अथ सूचीमुखो नाम पक्षी तेषां तं वृथायासमवलोक्य प्रोवाच—भोः सर्वे मूर्खा यूयम्, नैते वह्निकणाः, गुञ्जाफलानि एतानि। तत्किं वृथा श्रमेण? नैतस्माच्छीतरक्षा भविष्यति। तदन्विष्यतां कश्चिन्निर्वातो वनप्रदेशो गुहा वा गिरिकन्दरं वा। अद्यापि [3]साटोपा मेघा दृश्यन्ते। अथ तेषामेकतमो वृद्धवानरस्तमुवाच—

भो मूर्ख! किं तवानेन व्यापारेण, तद्गम्यताम्। उक्तञ्च—
मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितम्।
नालापयेद्विवेकज्ञो यदीच्छेत्सिद्धिमात्मनः ॥ ३३८ ॥

तथा च—आखेटकं वृथाक्लेशं मूर्खं व्यसनसंस्थितम्।
आलापयति यो मूढः स गच्छति पराभवम् ॥ ३३९ ॥

---

१. अतिकठोरेण प्रबलवेगेन वातसंस्पर्शेन वायुसम्बन्धेन हेतुना वेपमानं कम्पमानं कलेवरं गात्रं यस्य तत्तथाभूतम्। २. तुषारवर्षवत् हिमवृष्टिरिव उद्धतेन उत्कटेन प्रवर्षाणां सततवर्षिणां घनानां मेघानां धारया जलप्रवाहस्य निपातेन पतनेन समाहतं पीडितम्। ३. सवेगा वर्षोन्मुखा इत्यर्थः।

सोऽपि तमनादृत्य भूयोऽपि वानराननवरतमाह—भोः किं वृथ क्लेशेन। अथ यावदसौ न कथञ्चित्प्रलपन्विरमति तावदेकेन वानरे व्यर्थश्रमत्वात्कुपितेन पक्षाभ्यां गृहीत्वा शिलायाम् [1]आस्फालित [2]... रतश्च। अतोऽहं ब्रवीमि—'नानाम्यं नमते दारु' इत्यादि।

तथा च—उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ ३४० ॥

अन्यच्च—उपदेशो न दातव्यो यादृशे तादृशे जने।
पश्य वानरमूर्खेण सुगृही निर्गृही कृतः ॥ ३४१ ॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

## कथा ( १५ )

अस्ति कस्मिश्चिद्वनोद्देशे शमीवृक्षः। तस्य लम्बमानशाखा... कृतवासावरण्यचटकदम्पती वसतः स्म। अथ कदाचित्तयोः [3]सुख... संस्थयोर्हेमन्तमेघो मन्दं मन्दं वर्षितुमारब्धः। अत्रान्तरे कश्चिच्छाख... मृगो[4] [5]वातासारसमाहतः [6]प्रोद्धूषितशरीरो दण्तवीणां वादय... वेपमानस्तच्छमीमूलमासाद्योपविष्टः। अथ तं तादृशमवलोक्य चट... प्राह—भो भद्र !

हस्तपादसमोपेतो दृश्यते पुरुषाकृतिः।
शीतेन भिद्यसे मूढ ! कथं न कुरुषे गृहम् ॥ ३४२ ॥

एतच्छ्रुत्वा तां वानरः सकोपमाह—अधमे ! कस्मान्न त्वं मौनव्र... भवसि। अहो धाष्टर्यमस्याः। अद्य मामुपहसति।

एवं विचिन्त्य तामाह—मुग्धे ! किं तव ममोपरि चिन्तया।

उक्तञ्च—वाच्यं श्रद्धासमेतस्य पृच्छतश्च विशेषतः।
प्रोक्तं श्रद्धाविहीनस्य अरण्यरुदितोपमम् ॥ ३४३ ॥

तत्किं बहुना तावत्। इदानीम् अनुभव निजस्य धाष्टर्यस्य फ...

---

१. पातितः। २. मृतश्चेति यावत्। ३. सुखेन स्थितयोरित्यर्थः। ४. वान... ५. वातासारेण सवायुवृष्टिधारया समाहतः क्लेशितः। ६. वर्षाजलार्द्रशरीरः...

मित्युक्त्वा यावत् [1]कुलायस्थितया तयाभिहितः स तावत्तां शमीमारुह्य तस्याः कुलायं शतधा खण्डशोऽकरोत्। अतोऽहं ब्रवीमि—'उपदेशो न दातव्यः' इति। तन्मूर्ख! [2]शिक्षापितोऽपि न शिक्षितस्त्वम्। अथवा न ते दोषोऽस्ति, यतः साधोः शिक्षा गुणाय संपद्यते, नासाधोः। उक्तञ्च—

किं करोत्येव पाण्डित्यमस्थाने विनियोजितम्।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः॥ ३४४॥

तद्व्यर्थपाण्डित्यमाश्रित्य मम वचनमशृण्वन्नात्मनः शान्तिमपि वेत्सि। तन्नूनम् [3]अपजातस्त्वम्। उक्तञ्च—

जातः पुत्रोऽनुजातश्च अतिजातस्तथैव च।
अपजातश्च लोकेऽस्मिन्मन्तव्यः शास्त्रवेदिभिः॥ ३४५॥
मातृतुल्यगुणो जातस्त्वनुजातः पितुः समः।
अतिजातोऽधिकस्तस्मादपजातोऽधमाधमः॥ ३४६॥
अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः॥ ३४७॥

अहो साध्विदमुच्यते—

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात्पिता धूमेन घातितः॥ ३४८॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

## कथा ( १६ )

कस्मिंश्चिदधिष्ठाने धर्मबुद्धिः पापबुद्धिश्चेति द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित्पापबुद्धिना चिन्तितम्—अहं तावन्मूर्खो दारिद्र्योपेतश्च, तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वास्याश्रयेणार्थोपार्जनं कृत्वैनमपि वञ्चयित्वा सुखी भवामि। अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह—भो मित्र! वार्धकभावे किं त्वमात्मविचेष्टितं स्मरसि? देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्त्तां कथयिष्यसि। उक्तञ्च—

१. नीडवर्तिन्या। २. दत्तोपदेशोऽपीति भावः। ३. अतिनीचः।

देशान्तरेषु बहुविधभाषावेशादि येन न ज्ञातम्।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम् ॥ ३४९ ॥

तथा च—विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावद् व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥ ३५० ॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञात शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पाप बुद्धिना [1]प्रभूततरं वित्तमासादितम्। ततश्च द्वावपि तौ [2]प्रभूतोपार्जि तद्रव्यौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन निवृत्तौ।

उक्तञ्च—प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम्।
क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत् ॥ ३५१ ॥

अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः—भद्र! न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते। यतः कुटुम्बिनो बान्धवाश्च [3]प्रार्थ यिष्यन्ते। तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृ प्रविशावः। भूयोऽपि प्रयोजने सञ्जाते [4]तन्मात्रं समेत्यास्मात्स्थानान्ने ष्यावः। उक्तञ्च—

न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ ३५२ ॥

तथा च—यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ३५३ ॥

तदाकर्ण्य धर्मबुद्धिराह—'भद्र! एवं क्रियताम्।' तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा [5]सुखेन संस्थितवन्तौ। अथान्यस्मिन्नहनि पापबुद्धि निशीथेऽटव्यां गत्वा तत्सर्वं वित्तं समादाय गर्तं पूरयित्वा स्वभवनं जगाम। अथान्येद्युर्धर्मबुद्धिं समभ्येत्य प्रोवाच—'सखे! बहुकुटुम्बा व वित्ताभावात्सीदामः[6] तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः।' सोऽ ब्रवीत्—'भद्र! एवं क्रियताम्।' अथ द्वावपि गत्वा तत्स्थानं याव त्खनतस्तावद्रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः शिरस्ताडयन्न

१. अतिप्रचुरम्। २. उपार्जितबहुधनौ। ३. याचिष्यन्ते। ४. प्रयोजनो योगि। ५. सानन्दं स्थिताविति भावः। ६. कष्टमनुभवामः।

वाच—'भो धर्मबुद्धे ! त्वया हृतमेतद्धनम्, नान्येन । यतो भूयोऽपि गर्तापूरणं कृतम् । तत्प्रयच्छ मे तस्यार्धम् । अथवाहं राजकुले निवेदयिष्यामि ।' स आह—भो दुरात्मन् ! मैवं वद ! धर्मबुद्धिः खल्वहम् । नैतच्चौरकर्म करोमि । उक्तञ्च—

मातृवत्परदाराणि परद्रव्याणि लोष्टवत् ।
आत्मवत्सर्वभूतानि वीक्षन्ते धर्मबुद्धयः ॥ ३५४ ॥

एवं द्वावपि तौ विवदमानौ [1]धर्माधिकारिणं गतौ । प्रोचतुश्च परस्परं दूषयन्तौ । अथ धर्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थे [2]यावन्नियोजितौ तावत्पापबुद्धिराह—अहो न सम्यग्दृष्टोऽयं [3]न्यायः ।

उक्तञ्च—विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः ।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः ॥ ३५५ ॥

तदत्र विषये मम वृक्षदेवताः साक्षीभूतास्तिष्ठन्ति । ता अप्यावयोरेकतरं चौरं साधुं वा करिष्यन्ति । अथ तैः सर्वैरभिहितम्—'भोः ! युक्तमुक्तं भवता । उक्तञ्च—

अन्त्यजोऽपि यदा साक्षी विवादे सम्प्रजायते ।
न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः ॥ ३५६ ॥

तदस्माकमप्यत्र विषये महत्कौतूहलं वर्तते । [4]प्रत्यूषसमये युवाभ्यामप्यस्माभिः सह तत्र वनोद्देशे गन्तव्यम्' इति । एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच—'तात ! प्रभूतोऽयं मयार्थो धर्मबुद्धेश्चोरितः, स च तव वचनेन [5]परिणतिं गच्छति, अन्यथास्माकं प्राणैः सह यास्यति ।' स आह—'वत्स ! द्रुतं वद येन[6] प्रोच्य तद्द्रव्यं स्थिरतां नयामि । पापबुद्धिराह—तात ! अस्ति तत्प्रदेशे महाशमी । तस्यां महत्कोटरमस्ति । तत्र त्वं साम्प्रतमेव प्रविश । ततः प्रभाते यदाहं [7]सत्यश्रावणं करोमि, तदा त्वया वाच्यं यद् 'धर्मबुद्धिश्चौरः' इति । तथानुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिर्धर्मबुद्धिपुरःसरो धर्माधि-

---

१. न्यायाधीशम् । २. शपथकरणायेत्यर्थः । ३. विचारो निर्णय इति भावः । ४. प्रातःकाले । ५. अस्मदीयभोगरूपपरिणामम् । ६. साक्ष्यं प्रदायेत्यर्थः । ७. द्वयोर्मध्ये कश्चौर इत्यस्मिन्विषये यथार्थतां प्रकटयितुं वनदेवतामाराधयामीत्यर्थः ।

करणकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच—

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ ३५७ ॥

भगवति वनदेवते ! आवयोर्मध्ये यश्चौरस्तं कथय । अथ पापबुद्धि-पिता शमीकोटरस्थः प्रोवाच—'भोः ! शृणुत शृणुत ! धर्मबुद्धिना हृतमे-तद्धनम्' । तदाकर्ण्य सर्वे ते राजपुरुषा [1]विस्मयोत्फुल्ललोचना यावद्धर्म-बुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति तावद्धर्मबुद्धिना तच्छ-मीकोटरं [2]वह्निभोज्यद्रव्यैः परिवेष्ट्य वह्निना संदीपितम् । अथ ज्वलति तस्मिञ्शमीकोटरेऽर्धदग्धशरीरः स्फुटितेक्षणः करुणं [3]परिदेवयन्पाप-बुद्धिपिता निश्चक्राम । ततश्च तैः सर्वैः पृष्टः—भोः किमिदम् ? इत्युक्ते स [4]पापबुद्धिविचेष्टितं सर्वमिदं निवेदयित्वोपरतः । अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां [5]प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः—अहो ! साध्विदमुच्यते—

उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलेन हता बकाः ॥ ३५८ ॥

धर्मबुद्धिः प्राह—कथमेतत् । ते प्रोचुः—

## कथा ( १७ )

अस्ति कस्मिंश्चिद्वनोद्देशे बहुबकसनाथो वटपादपः । तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म । स च बकबालकानजातपक्षानपि सदैव भक्षयन्कालं नयति स्म । अथैको बकस्तेन भक्षितान्यपत्यानि दृष्ट्वा [6]शिशुवैराग्यात्सरस्तीरमासाद्य [7]बाष्पपूरपूरितनयनोऽधोमुखस्तिष्ठति । तं च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच—माम ! किमेवं रुद्यते भवताद्य ? स आह—'भद्र ! किं करोमि मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः, तद्दुःखदुःखितोऽहं रोदिमि, तत्कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय ।' तदाकर्ण्य कुलीरकश्चिन्तयामास

---

१. साश्चर्या इति भावः । २. काष्ठप्रभृतिभिः । ३. विलपन् । ४. पापबुद्धिकृत्यम् । ५. बद्ध्वा । ६. शिशुविनाशजनितदुःखात् । ७ रुदन्नित्यर्थः ।

मास—'अयं तावदस्मज्जातिसहजवैरी,[1] अतः तथोपदेशं प्रयच्छामि सत्यानृतं, यथान्येऽपि वकाः सर्वे संक्षयमायान्ति'।

उक्तञ्च—नवनीतसमां वाणीं कृत्वा चित्तं तु निर्दयम्।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा॥ ३५९॥

आह च—'माम! यद्येवं तन्मत्स्यमांसखण्डानि नकुलस्य बिलद्वारात्सर्पकोटरं यावत्प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति।' अथ तथानुष्ठिते मत्स्यमासानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि 'तद्वृक्षाश्रयाः सर्वे वकाश्च शनैर्भक्षिताः। अतो वयं ब्रूमः—'उपायं चिन्तयेत्'॥ तदनेन पापबुद्धिना उपायश्चिन्तितो नापायः। ततस्तत्फलं प्राप्तम्।' अतोऽहं ब्रवीमि—'धर्मबुद्धिः कुबुद्धिश्च' इति। एवं मूढ! त्वयाप्युपायश्चिन्तितो नापायः पापबुद्धिवत्। तन्न भवसि त्वं सज्जनः, केवलं पापबुद्धिरसि। ज्ञातो मया स्वामिनः प्राणसंदेहानयनात्। प्रकटीकृतं त्वया स्वयमेवात्मना दुष्टत्वं कौटिल्यं च। अथवा साध्विदमुच्यते—

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम्।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः॥ ३६०॥

यदि त्वं स्वामिनं एनां दशां नयसि तदस्मद्विधस्य का गणना। तस्मान्ममासन्नेन[3] भवता न भाव्यम्। उक्तञ्च—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः॥ ३६१॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

## कथा (१८)

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः। स च [4]विभवक्षयाद्देशान्तरगमनमना व्यचिन्तयत्—

यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः।
तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः॥ ३६२॥

---

१. मत्स्यादीनां स्वभावशत्रुः। २. वटवृक्षवासिनः। ३. समीपवर्तिना। ४. दरिद्रतावशात्।

तथा च—येनाहंकारयुक्तेन चिरं विलसितं पुरा।
दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ३६३ ॥

तस्य च गृहे [1]लोहभारघटिता [2]पूर्वपुरुषोपार्जिता तुलासीत्। तां च कस्यचिच्छ्रेष्ठिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनमुवाच—'भोः श्रेष्ठिन्! दीयतां मे सा निक्षेपतुला।' स आह—'भोः नास्ति सा त्वदीया तुला। मूषकैर्भक्षितेति।' जीर्णधन आह—भोः श्रेष्ठिन्! नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति। ईदृगेवायं संसारः। न किञ्चिदत्र शाश्वतमस्ति। परमहं नद्यां स्नानार्थं गमिष्यामि। तत्त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह [3]स्नानोपकरणहस्तं प्रेषय इति। सोऽपि चौर्यभयात्तस्य शङ्कितः स्वपुत्रमुवाच—'वत्स! पितृव्योऽयं तव स्नानार्थं यास्यति। तद्गम्यतामनेन सार्धं स्नानोपकरणमादाय' इति। अहो! साध्विदमुच्यते—

न भक्त्या कस्यचित्कोऽपि प्रियं प्रकुरुते नरः।
मुक्त्वा भयं प्रलोभं वा कार्यकारणमेव वा ॥ ३६४ ॥

तथा च—अत्यादरो भवेद्यत्र कार्यकारणवर्जितः।
तत्र शंका प्रकर्तव्या परिणामे सुखावहा ॥ ३६५ ॥

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनास्तेनाभ्यागतेन सह प्रस्थितः। तथानुष्ठिते स वणिक्स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाच्छाद्य सत्वरं गृहमागतः। पृष्टश्च तेन वणिजा—'भोः अभ्यागत! कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गतः' इति। स आह—'नदीतटात्स श्येनेन हृतः' इति। श्रेष्ठ्याह—'मिथ्यावादिन्! किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति। तत्समर्पय मे सुतम्। अन्यथा राजकुले निवेदयिष्यामि' इति। स आह 'भोः सत्यवादिन्! यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयति। तदर्पय मे तुलाम्, यदि [4]दारकेण प्रयोजनम्।'

---

१. लोहमयी द्विसहस्रपललोहघटिता वा। २. कुलपरम्परायातेति यावत्। ३. हस्तदत्तस्नानीयवस्तुसम्भारम्। ४. पुत्रेण।

एवं तौ विवदमानौ द्वावपि राजकुलं गतौ। तत्र श्रेष्ठी तारस्वरेण प्रोवाच—'भोः [1]अब्रह्मण्यमब्रह्मण्यम्। मम शिशुरनेन चौरेणापहृतः' अथ धर्माधिकारिणस्तमूचुः—'भोः समर्प्यतां श्रेष्ठिसुतः?' स आह—किं करोमि। पश्यतो मे नदीतटाच्छ्येनेनापहृतः शिशुः। तच्छ्रुत्वा ते प्रोचुः—भोः न सत्यमभिहितं भवता। किं श्येनः शिशुं हर्तुं समर्थो भवति? स आह—'भो भोः, श्रूयतां मद्वचः—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः॥' ३६६ ॥

ते प्रोचुः—'कथमेतत्' ततः श्रेष्ठी सभ्यानामग्र आदितः सर्वं वृत्तान्तं निवेदयामास। ततस्तैर्विहस्य द्वावपि तौ परस्परं सम्बोध्य [2]तुलाशिशुप्रदानेन सन्तोषितौ। अतोऽहं ब्रवीमि—'तुला लोहसहस्रस्य' इति। तन्मूर्ख! [3]सञ्जीवकप्रसादमसहमानेन त्वयैतत्कृतम्! अहो, साध्विदमुच्यते—

प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्ते स्थितं निर्धनाः॥
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खाः सदा॥ ३६७ ॥

तथा च—मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः॥ ३६८ ॥

तन्मूर्ख! [4]हितमप्यहितं कृतम्। उक्तञ्च—

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः॥ ३६९ ॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

## कथा (१९)

कस्यचिद्राज्ञो नित्यं वानरोऽतिभक्तिपरो[5]ऽङ्गसेवकोऽन्तःपुरेऽप्रति-

---

१. महाननर्थो जात इति भावः। २. अन्योन्यं तुलायाः शिशोश्च प्रदानेनेत्यर्थः। ३. सञ्जीवककृतां कृपाम्। ४. हितकरमपि हितप्रतिकूलं गणितमिति यावत्। ५. शरीरसेवाकारी।

[1]षिद्धप्रसरोऽतिविश्वासस्थान[2]मभूत्। एकदा राज्ञो निद्रां गतस्य वानरे व्यजनं नीत्वा वायुं विदधति राज्ञो वक्षःस्थलोपरि मक्षिकोपविष्टा। [3]व्यजनेन मुहुर्मुहुर्निषिध्यमानापि पुनः पुनस्तत्रैवोपविशति। ततस्तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीक्ष्णं खड्गमादाय तस्या उपरि प्रहारो विहितः। ततो मक्षिकोड्डीय गता। तेन शितधारेणासिना राज्ञो वक्षो द्विधा जातं राजा मृतश्च। तस्माच्चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः। अपरमेकस्मिन्नगरे कोऽपि विप्रो महा-विद्वान् परं पूर्वजन्मयोगेन चौरो वर्तते। स तस्मिन्पुरेऽन्यदेशादा-गतांश्चतुरो विप्रान्बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान्—'अहो केनोपायेनैषां धनं लभे' इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि चातिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्तुमारब्धा।

अथ तस्मिन्सेवां कुर्वति तैर्विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि, ततस्तानि जङ्घामध्ये तत्समक्षं प्रक्षिप्य स्वदेशं प्रति गन्तुमुद्यमो विहितः। ततः स धूर्तविप्रस्तान्विप्रान् गन्तुमुद्यतान्प्रेक्ष्य [4]चिन्ताव्याकुलितमनाः सञ्जातः। अहो धनमेतन्न किञ्चिन्मम [5]चटितम्। अथैभिः सह यामि। पथि क्वापि विषं दत्त्वैतान्निहत्य सर्वरत्नानि गृह्णामि। इति विचिन्त्य तेषामग्रे सकरुणं विलप्येदमाह—भो! मित्राणि! यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः, तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नैवाकुलं सञ्जातं, यथा धृतिं क्वापि न धत्ते यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत। तद्वचः श्रुत्वा ते करुणार्द्रचित्तास्तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथाध्वनि तेषां पञ्चानामपि [6]पल्लीपुरमध्येन व्रजतां [7]ध्वाङ्क्षाः कथयितुमारब्धाः—'रे रे [8]किराताः! धावत धावत [9]सपादलक्षधनिनो यान्ति। एतान्निहत्य धनं नयत' ततः किरातैर्ध्वाङ्क्षवचनमाकर्ण्य सत्वरं गत्वा ते विप्रा लगुडप्रहारैर्ज-

१. अनिवारितप्रवेशः। २. अत्यन्तविश्वासपात्रमित्यर्थः। ३. तालवृन्तेन (पंखा) इति भाषायाम्। ४. कथमेषां रत्नानि हरेयमिति चिन्तापरः। ५. प्रदत्तम्। ६. व्याधानां नगरमध्येनेत्यर्थः। ७. वायसाः। ८. व्याधाः। ९. महाधनिका इति भावः।

र्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः। परं धनं किञ्चिन्न लब्धम्। तदा तैः किरातैरभिहितम्—'भोः पान्थाः! पुरा कदापि ध्वाङ्क्षवचनमनृतं नासीत्। ततो भवतां सन्निधौ क्वापि धनं विद्यते तदर्पयत, अन्यथा सर्वेषामपि वधं विधाय चर्म विदार्य प्रत्यङ्गंप्रेक्ष्य धनं नेष्यामः' इति। तदा तेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम्—यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति, तदापि मां वधिष्यन्ति। ततोऽहं पूर्वमेवात्मानमरत्नं[1] समर्प्यैतान्मुञ्चामि[2]। उक्तञ्च—

मृत्योर्बिभेषि किं बाल! न स भीतं विमुञ्चति।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥ ३७०॥

तथा च—गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः।
सूर्यस्य मण्डलं भित्त्वा स याति परमां गतिम्॥ ३७१॥

इति निश्चित्याभिहितम्—भोः! किराताः! यद्येवं ततो मां पूर्वं निहत्य विलोकयत इति। ततस्तैस्तथानुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोऽपि मुक्ताः। अतोऽहं ब्रवीमि—'पण्डितोऽपि वरं शत्रुः' इति। अथैवं [3]संवदतोस्तयोः सञ्जीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य [4]खरनखरप्रहाराभिहतो [5]गतासुर्वसु[6]न्धरापीठे निपपात। अथ तं गतासुमवलोक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः[7] प्रोवाच—भोः! अयुक्तं मया पापेन कृतं सञ्जीवकं व्यापादयता यतो विश्वासघातादन्यन्नास्ति पापतरं कर्म। उक्तञ्च—

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ॥ ३७२॥

भूमिक्षये राजविनाश एव भृत्यस्य वा बुद्धिमतो विनाशे।
नो युक्तमुक्तं ह्यनयोः समत्वं नष्टापि भूमिः सुलभा न भृत्याः॥३७३॥

तथा मया सभामध्ये स सदैव प्रशंसितः। तत्किं कथयिष्यामि

---

१. रत्नरहितं प्रदर्श्येति यावत्। २. व्याधेभ्यो मोचयामीत्यर्थः। ३. वार्तालापं कुर्वतोः। ४. तीक्ष्णनखप्रहारैराहत इत्यर्थः। ५. मृतः सन्नित्यर्थः। ६. भूमौ। ७. सञ्जीवकगुणानां स्मरणेन जातदयः।

तेषामग्रतः। उक्तञ्च—

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा॥ ३७४॥

एवंविधं [1]प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह—देव! [2]कातरतमस्तवैष [3]न्यायो यद् द्रोहकारिणं [4]शष्पभुजं हत्वेत्थं शोचसि तन्नैतदुपपन्नं [5]भूभुजाम्। उक्तञ्च—

पिता वा यदि वा भ्राता पुत्रो भार्याऽथवा सुहृत्।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम्॥ ३७५॥

तथा च—

राजा घृणी ब्राह्मणः सर्वभक्षी स्त्री चात्रपा दुष्टमतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी त्याज्या अमी यश्च कृतं न वेत्ति॥३७६॥

अपि च—सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा॥ ३७७॥

अपि च—अकृतोपद्रवः कश्चिन्महानपि न पूज्यते।
पूजयन्ति नरा नागान्न तार्क्ष्यं नागघातिनम्॥ ३७८॥

तथा च—अशोच्यानन्वशोचंस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः॥ ३७९॥

एवं तेन [6]संबोधितः पिङ्गलकः संजीवकशोकं त्यक्त्वा [7]दमनकसाचिव्येन राज्यमकरोत्।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रभेदो नाम
प्रथमं तन्त्रं समाप्तम्।

---

१. विलपन्तम्। २. अत्यन्तमनुचितः। ३. व्यवहारो विचारो इति यावत्। ४. तृणभोजिनम्। ५. न युक्तमित्यर्थः। ६. शोकापनोदाय कृतनीतिशिक्ष इत्यर्थः। ७. दमनकं मन्त्रिणं विधाय तत्साहाय्येनेति भावः।

# मित्रसम्प्राप्तिः

अथेदमारभ्यते मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रम्। यस्यायमादिमः श्लोकः—

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः।
साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत् ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरस्थो [1]महोच्छ्रायवान् [2]नानाविहङ्गोपभुक्तफलः [3]कीटैरावृतकोटरश्छायाश्वासितपथिकजनसमूहो [4]न्यग्रोधपादपो [5]महान्। अथवा युक्तम्—

छायासुप्तमृगः शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः।
विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एव द्रुमः
सर्वाङ्गैर्बहुसत्त्वसङ्गसुखदो भूभारभूतोऽपरः ॥ २ ॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स कदाचित्प्राणयात्रार्थं पुरमुद्दिश्य प्रचलितो यावत्पश्यति तावज्जालहस्तोऽतिकृष्णतनुः स्फुटितचरण ऊर्ध्वकेशो[6] यमकिङ्कराकारो नरः सम्मुखो बभूव। अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्—'यदयं दुरात्माद्य [7]ममाश्रयवटपादपसम्मुखोऽभ्येति तन्न ज्ञायते किमद्यवटवासिनां विहङ्गमानां [8]संक्षयो भविष्यति ?' एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपादपं गत्वा सर्वान्विहङ्गमान्प्रोवाच—भोः! अयं दुरात्मा लुब्धको जालतण्डुलहस्तः समभ्येति तत्सर्वथा तस्य न विश्वसनीयम्; एष जालं प्रसार्य

---

१. अत्युन्नतः।
२. नानाविहङ्गैः अनेकैः पक्षिभिः उपभुक्तानि भक्षितानि फलानि यस्य सः।
३. क्षुद्रजन्तुभिर्व्याप्तकोटरः।
४. छायया आश्वासितः आनन्दितः पथिकजनसमूहः पान्थवृन्दं येन सः।
५. वटवृक्षः। ६. भयङ्कर इत्यर्थः। ७. आवासभूतवटतरून्मुखः।
८. विनाशः।

तण्डुलान्प्रक्षेप्स्यति ते तण्डुला भवद्भिः सर्वैरपि [1]कालकूटसदृशा द्रष्टव्याः। एवं वदतस्तस्य स लुब्धकस्तत्र वटतल आगत्य जालं प्रसार्य सिन्धुवार-सदृशांस्तण्डुलान्प्रक्षिप्य नातिदूरं गत्वा [2]निभृतः स्थितः। अथ ये पक्षिणस्तत्र स्थितास्ते [3]लघुपतनकवाक्यार्गलया निवारितास्तांस्तण्डुलान् [4]हालाहलाङ्कुरानिव वीक्षमाणा निभृतास्तस्थुः। अत्रान्तरे चित्रग्रीवो नाम कपोतराजः [5]सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमंस्तांस्तण्डुलान्दूरतोऽपि पश्यंल्लघुपतनकेन निवार्यमाणोऽपि [6]जिह्वालौल्याद् भक्षणार्थम् [7]अपतत् सपरिवारो निबद्धश्च। अथवा साध्विदमुच्यते-

जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम्।
अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥ ३ ॥

उक्तं च—पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ४ ॥

तथा च—कृतान्तपाशबद्धानां दैवोपहतचेतसाम्।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ ५ ॥

अत्रान्तरे लुब्धकस्तान्बद्धान्विज्ञाय प्रहृष्टमनाः [8]प्रोद्यतयष्टिस्तद्वधार्थं प्रधावितः। चित्रग्रीवोऽप्यात्मानं सपरिवारं बद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान्कपोतानूचे-अहो न भेतव्यम्। उक्तं च—

व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ६ ॥
सम्पत्तौ च विपत्तौ च महतामेकरूपता।
उदये सविता रक्तो रक्तश्चास्तमये तथा ॥ ७ ॥



१. विषसमानाः। २. तिरोहितः सन्निति भावः।
३. लघुपतनकस्य तन्नामकस्य काकस्य वाक्यमेव अर्गला कपाटावष्टम्भकदारुखण्डविशेषः तया, लघुपतनकेन निषिद्धा इत्यर्थः।
४. विषाङ्कुरानिव। ५. बहुकपोतसहित इत्यर्थः।
६. तण्डुलभक्षणलोभादिति यावत्। ७. नीचैरागतः।
८. उत्क्षिप्तदण्डः।

तत्सर्वे वयं [1]हेलयोड्डीय सपाशजाला अस्यादर्शनं गत्वा [2]मुक्तिं प्राप्नुमः। नो चेद्भयविक्लवाः सन्तो हेलया [3]समुत्पातं न करिष्यथ ततो मृत्युमवाप्स्यथ। उक्तं च—

तनवोऽप्यायता नित्यं तन्तवो बहुलाः समाः।
बहून्बहुत्वादायासान्सहन्तीत्युपमा सताम् ॥ ८ ॥

तथानुष्ठिते लुब्धको जालमादायाकाशे [4]गच्छतां तेषां पृष्ठतो भूमिस्थोऽपि पर्यधावत्। तत ऊर्ध्वाननः श्लोकमेनमपठत्—

जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी।
यावच्च विवदिष्यन्ति पतिष्यन्ति न संशयः ॥ ९ ॥

लघुपतनकोऽपि प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यतीति कुतूहलात्तत्पृष्ठतोऽनुसरति। अथ [5]दृष्टेरगोचरतां गतान् विज्ञाय लुब्धको निराशः श्लोकमपठन्निवृत्तश्च।

नहि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ १० ॥

तदास्तां [6]तावद्विहङ्गामिषलोभो यावत्कुटुम्बवर्तनोपायभूतं[7] जालमपि मे नष्टम्। चित्रग्रीवोऽपि लुब्धकमदर्शनीभूतं ज्ञात्वा तानुवाच— भोः! निवृत्तः स दुरात्मा लुब्धकः। तत्सर्वैरपि स्वस्थैर्गम्यतां महिलारोप्यस्य प्रागुत्तरदिग्भागे तत्र मम सुहृद्धिरण्यको नाम मूषकः सर्वेषां [8]पाशच्छेदं करिष्यति। उक्तं च—

सर्वेषामेव मर्त्यानां व्यसने समुपस्थिते।
वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न सन्दधे ॥ १२ ॥

एवं ते कपोताश्चित्रग्रीवेण [9]सम्बोधिता महिलारोप्ये नगरे हिर-

---

१. अवज्ञया युगपदेवेति भावः। २. प्राणसङ्कटादुद्धारम्। ३. उड्डयनम्।
४. उड्डीयमानानाम् ५. दृष्टेस्तिरोहितानित्यर्थः।
६. पक्षिमांसस्य लोभः। ७. परिवारस्य जीविकोपार्जनसाधनीभूतम्।
८. बन्धनच्छेदनम्। ९. उक्ता इत्यर्थः।

ण्यकबिलदुर्गं प्रापुः। हिरण्यकोऽपि सहस्रबिलदुर्गं प्रविष्टः सन्नकुतोभयः [1]सुखेनास्ते। अथवा साध्विदमुच्यते—

अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः।
अवसन्मूषकस्तत्र कृत्वा शतमुखं बिलम्॥ १३॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः॥ १४॥

तथा च—न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
तत्कर्म सिध्यते राज्ञां दुर्गेणैकेन यद्रणे॥ १५॥
शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः।
तस्माद् दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः॥ १६॥

अथ चित्रग्रीवो बिलमासाद्य तारस्वरेण प्रोवाच—भो! भो! मित्र! हिरण्यक! सत्वरमागच्छ महती मे [2]व्यसनावस्था वर्तते। तच्छ्रुत्वा हिरण्यकोऽपि बिलदुर्गान्तर्गतः सन्प्रोवाच—भोः! को भवान्? किमर्थमायातः? किं कारणम्? कीदृक् ते व्यसनावस्थानम्? तत्कथ्यताम्' इति। तच्छ्रुत्वा चित्रग्रीव आह—भोः! चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृत् तत्सत्वरमागच्छ' [3]गुरुतरं प्रयोजनमस्ति। तदाकर्ण्य [4]पुलकिततनुः प्रहृष्टात्मा स्थिरमनास्त्वरमाणो[5] निष्क्रान्तः।
अथवा साध्विदमुच्यते—

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः।
गृहे गृहवतां नित्यमागच्छन्ति महात्मनाम्॥ १७॥
आदित्यस्योदयस्तात! ताम्बूलं भारती कथा।
इष्टा भार्या सुमित्रं च अपूर्वाणि दिने दिने॥ १८॥
सुहृदो भवने यस्य समागच्छन्ति नित्यशः।
चित्ते च तस्य सौख्यस्य न किञ्चित्प्रतिमं सुखम्॥ १९॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः [6]सविषाद-

---
१. निर्भयः। २. विपत्प्राप्तिः। ३. आवश्यकं कार्यं विद्यत इत्यर्थः।
४. मित्रागमनश्रवणेन सानन्द इति भावः।
५. शीघ्रतां कुर्वन्। ६. सदुःखम्।

मिदमाह—भोः ! किमेतत् ? स आह—भोः ! जानन्नपि किं पृच्छसि ।
उक्तं च यतः—

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति ॥ २० ॥

तत्प्राप्तं मयैतद् बन्धनं जिह्वालौल्यात् । सांप्रतं त्वं सत्वरं [1]पाश-विमोक्षं कुरु । तदाकर्ण्य हिरण्यकः प्राह—

अर्धार्धाद्योजनशतादामिषं वीक्षते खगः ।
सोऽपि पार्श्वस्थितं दैवाद् बन्धनं न च पश्यति ॥ २१ ॥

तथा च—
रविनिशाकरयोर्ग्रहपीडनं गजभुजङ्गविहङ्गमबन्धनम् ।
मतिमतां च निरीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥ २२ ॥

तथा च—

व्योमैकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि ।
दुर्णीतं किमिहास्ति किञ्च सुकृतं कः स्थानलाभे गुणः
कालः सर्वजनान्प्रसारितकरो गृह्णाति दूरादपि ॥ २३ ॥

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुमुद्यतं स तमाह—भद्र ! मा मैवं कुरु प्रथमं भृत्यानां पाशच्छेदं कुरु तदनु ममापि च । तच्छ्रुत्वा कुपितो हिरण्यकः प्राह—भोः ! न युक्तमुक्तं भवता यतः [2]'स्वामिनोऽनन्तरं भृत्याः ।' स आह—भद्र ! मा मैवं वद । [3]मदाश्रयाः सर्वे एते [4]वराकाः अपरं स्वकुटुम्बं परित्यज्य समागताः [5]तत्कथमेतावन्मात्रमपि सम्मानं न करोमि । उक्तं च—

यः सम्मानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम् ।
वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ २४ ॥

---

१. बन्धनखण्डनम् ।
२. प्रभो रक्षणानन्तरमेव भृत्या रक्षितव्या इति भावः । ३. समाश्रिताः ।
४. दीना दयनीया इति यावत् ५. रक्षणमात्रमपीत्यर्थः ।

तथा च—विश्वासः सम्पदां मूलं तेन यूथपतिर्गजः ।
सिंहो मृगाधिपत्येऽपि न मृगः परिवार्यते ॥ २५ ॥

अपरं मम कदाचित्पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति । अथवा दुरात्मा लुब्धकः समभ्येति तन्नूनं मम नरकपात एव । उक्तं च—

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।
सुखी स्यान्नरकं याति परत्रेह च सीदति ॥ २६ ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह–भोः ! वेद्म्यहं राजधर्मम्, परं मया तव परीक्षा कृता । तत्सर्वेषां पूर्वं पाशच्छेदं करिष्यामि । भवानप्यनेन विधिना[1] [2]बहुकपोतपरिवारो भविष्यति । उक्तं च—

कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा ।
सम्भवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ २७ ॥

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवमाह—मित्र ! गम्यतामधुना स्वाश्रयं प्रति भूयोऽपि [3]व्यसने प्राप्ते समागन्तव्यम्' इति । तान्सम्प्रेष्य पुनरपि दुर्गं प्रविष्टः । चित्रग्रीवोऽपि सपरिवारः स्वाश्रयमगमत् । अथवा साध्विदमुच्यते—

मित्रवान्साधयत्यर्थान्दुःसाध्यानपि वै यतः ।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ २८ ॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षमवलोक्य विस्मितमना व्यचिन्तयत्—अहो ! बुद्धिरस्य हिरण्यकस्य [4]शक्तिश्च दुर्गसामग्री च । [5]तदीदृगेव विधिर्विहङ्गानां बन्धनमोक्षात्मकः । अहं च न कस्यचिद्विश्वसिमि [6]चलप्रकृतिश्च । तथाप्येनं मित्रं करोमि । उक्तं च—

अपि सम्पूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥ २९ ॥

एवं [7]सम्प्रधार्य पादपादवतीर्य बिलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान्—एह्येहि भो ! हिरण्यक ! एहि । तच्छब्दं श्रुत्वा

---

१. आश्रितरक्षणेनेत्यर्थः । २. बहुसहायकसम्पन्नः ।
३. कष्टप्राप्तौ ४. दुःखविमोचनसामर्थ्यमिति यावत् ।
५. एवंविधैरेव सह सख्यसम्पादनं कर्त्तव्यमिति भावः ।
६. चपलस्वभावः । ७. विचार्य ।

हिरण्यको व्यचिन्तयत्—'किमन्योऽपि कश्चित्कपोतो [1]बन्धनशेषस्तिष्ठऽति येन मां [2]व्याहरति' आह च—भोः! भवान्? स आह—अहं लघुपनको नाम वायसः। तच्छ्रुत्वा [3]विशेषादन्तर्लीनो हिरण्यक आह—भोः! द्रुतं गम्यतामस्मात्स्थानात्। वायस आह—अहं तव पार्श्वे गुरुकार्येण समागतः तत्किं न क्रियते मया सह दर्शनम्? हिरण्यक आह—'न मेऽस्ति त्वया सह संगमेन प्रयोजनम्' इति। स आह—भोः! चित्रग्रीवस्य मया तव सकाशात्पाशमोक्षणं दृष्टम्। तेन मम महती प्रीतिः संजाता तत्कदाचिन्ममापि बन्धने जाते तव पार्श्वान्मुक्तिर्भविष्यति तत्क्रियतां मया सह मैत्री। हिरण्यक आह—अहो! त्वं भोक्ता अहं ते भोज्यभूतः तत्का त्वया सह मम मैत्री। तद्गम्यताम्, [4]मैत्रीविरोधभावात्कथम्! उक्तं च—

> ययोरेव समं वित्तं ययोरेव समं कुलम्।
> तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः॥ ३०॥

तथा च—

> यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः।
> हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः॥ ३१॥

तद्गम्यताम्' इति। वायस आह—भो हिरण्यक! एषोऽहं तव दुर्गद्वार उपविष्टः, यदि त्वं मैत्रीं न करोषि ततोऽहं [5]प्राणमोक्षणं तवाग्रे करिष्यामि। अथवा [6]प्रायोपवेशनं मे स्यात्' इति। हिरण्यक आह—भोः! त्वया वैरिणा सह कथं मैत्रीं करोमि। उक्तं च—

> वैरिणा न हि संदध्यात्सुश्लिष्टेनापि संधिना।
> सुतप्तमपि पानीयं शमयत्येव पावकम्॥ ३२॥

वायस आह—भोः! त्वया सह [7]दर्शनमपि नास्ति कुतो वैरम्! तत्किमनुचितं वदसि। हिरण्यक आह—द्विविधं वैरं भवति—'सहजं [8]कृत्रिमं च। तत्सहजवैरी[10] त्वमस्माकम् उक्तं च—

---

१. जालबद्धः। २. आह्वयति। ३. बिलाभ्यन्तर्गतः।
४ शत्रुत्वात्त्वया सह मम सख्यमसङ्गतमिति भावः।
५. उद्बन्धनादिना प्राणत्यागम्। ६. निराहारव्रतम्।
७. परस्परं साक्षात्कारोऽपीत्यर्थः। ८. जन्मसिद्धम्।
९. केनापि कारणेन जातम्। १०. जन्मतः शत्रुः।

कृत्रिमं नाशमभ्येति वैरं द्राक् कृत्रिमैर्गुणैः ।
प्राणादानं विना वैरं सहजं याति न क्षयम् ॥ ३३ ॥

वायस आह—भोः ! द्विविधस्य वैरस्य लक्षणं श्रोतुमिच्छामि तत्कथ्यताम् ? । हिरण्यक आह—भोः ! कारणेन निर्वृत्तं कृत्रिमम्, [1]तत्तदर्होपकारकरणाद्गच्छति । स्वाभाविकं पुनः कथमपि न गच्छति तद्यथा—'नकुलसर्पाणाम्, शष्पभुङ्नखायुधानाम्, जलवह्न्योः, देवदैत्यानाम्, सारमेयमार्जाराणाम्, ईश्वरदरिद्राणाम्, सपत्नीनाम्, सिंहगजानाम्, लुब्धकहरिणानाम्, श्रोत्रियभ्रष्टक्रियाणाम्, मूर्खपण्डितानाम्, पतिव्रताकुलटानाम्, सज्जनदुर्जनानाम्, न कश्चित्केनापि व्यापादितः तथापि प्राणान्सन्तापयन्ति । वायस आह—भोः ! अकारणमेतत् । श्रूयतां वचनम्—

कारणान्मित्रतां याति कारणादेति शत्रुताम् ।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ३४ ॥

तस्मात्कुरु मया सह समागमं मित्रधर्मार्थम् । हिरण्यक आह—भोः ! श्रूयतां [2] नीतिसर्वस्वम्—

सकृद् दुष्टमपीष्टं यः पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३५ ॥

अथवा गुणवानहम्, न मे कश्चिद्वैरयातनां [3] करिष्यति, एतदपि न [4] सम्भाव्यम् । उक्तं च—

सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिने-
र्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् ।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-
मज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ ३६ ॥

वायस आह—अस्त्येतत् । तथापि श्रूयताम्—

उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥ ३७ ॥

---

१. वैरकारणविनाशोचितकार्यकरणात् । २. नीतेस्तत्त्वम् ।
३. शत्रुभावेन परिपीडनम् । ४. न मन्तव्यमित्यर्थः ।

मृद्घट इव सुखभेद्यो दुःसंधानश्च दुर्जनो भवति ।
सुजनस्तु कनकघट इव दुर्भेदः सुकरसन्धिश्च ॥ ३८ ॥

इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत्सज्जनमैत्री विपरीतानां तु विपरीता ॥ ३९ ॥

तथा च–आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ४० ॥

तत्साधुरहम् । अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि । स आह—न मेऽस्ति ते शपथैः [1] प्रत्ययः । उक्तं च—

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः ।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥

न विश्वासं विना शत्रुर्देवानामपि सिध्यति ।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ४२ ॥

अन्यच्च—बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत् ।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥ ४३ ॥

तथा च—सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः ।
नाशयेच्च शनैः पश्चात्प्लवं सलिलपूरवत् ॥ ४४ ॥

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ४५ ॥

न वध्यते ह्यविश्वस्तो दुर्बलोऽपि मदोत्कटैः ।
विश्वस्ताश्चाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ४६ ॥

सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च ।
बृहस्पतेरविश्वासो नीतिसंधिस्त्रिधा स्थितः ॥ ४७ ॥

तथा च—महताप्यर्थसारेण यो विश्वसिति शत्रुषु ।
भार्यासु सुविरक्तासु तदन्तं तस्य जीवितम् ॥ ४८ ॥

तच्छ्रुत्वा लघुपतनकोऽपि निरुत्तरश्चिन्तयामास—अहो ! [2] बुद्धिप्रागल्भ्यमस्य नीतिविषये । अथवा अत एवास्योपरि [3] मैत्रीपक्षपातः । स आह–भो हिरण्यक !

---

१. विश्वास इत्यर्थः ।
२. चातुर्य्यमिति यावत् ।
३. मित्रताकरणाग्रहः ।

सतां साप्तपदं मैत्रमित्याहुर्विबुधा जनाः ।
तस्मात्त्वं मित्रतां प्राप्तो वचनं मम तच्छृणु ॥ ४९ ॥

[1]दुर्गस्थेनापि त्वया मया सह नित्यमेवालापो [2]गुणदोषसुभाषितगोष्ठीकथाः सर्वदा कर्त्तव्याः, यद्येवं न विश्वसिषि । तच्छ्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्—[3] विदग्धवचनोऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च तद्युक्तमनेन मैत्रीकरणम् । परं कदाचिन्मम दुर्गे चरणपातोऽपि न कार्यः ।

तच्छ्रुत्वा वायस आह—'भद्र ! एवं भवतु' ततः प्रभृति द्वौ तावपि सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः । परस्परं कृतोपकारौ कालं नयतः । लघुपतनकोऽपि [4]मांसशकलानि मेध्यानि [5]बलिशेषाण्यन्यानि [6]वात्सल्याहृतानि पक्वान्नविशेषाणि हिरण्यकार्थमानयति ।

हिरण्यकोऽपि तण्डुलानन्यांश्च भक्ष्यविशेषांल्लघुपतनकार्थं रात्रावाहृत्य तत्कालायातस्यार्पयति । अथवा युज्यते द्वयोरप्येतत् । उक्तञ्च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ५० ॥

नोपकारं विना प्रीतिः कथञ्चित्कस्यचिद्भवेत् ।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ५१ ॥

तावत्प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ५२ ॥

पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारणम् ।
यत्प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥ ५३ ॥

पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य ।
दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुतापि पश्य ॥ ५४ ॥

---

१. बिलमध्यस्थितेनैवेत्यर्थः ।
२. गुणाश्च दोषाश्च तेषां सुभाषितेन या गोष्ठीकथाः सम्भूयालापास्ताः ।
३. विदग्धस्य चतुरस्येव वचनं यस्य स वाक्चतुर इति यावत् ।
४. मांसखण्डानि । ५. पूजनादवशिष्टानि । ६. स्नेहेन आनीतानि ।

किम्बहुना—

प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत् ।
मूषको वायसश्चैव गतौ कृत्रिममित्रताम् ॥ ५५ ।

एवं स मूषकः [1] तदुपकाररञ्जितस्तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टस्तेन सह सर्वदैव [2] गोष्ठीं करोति । अथान्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच—भद्र ! हिरण्यक ! विरक्तिः संजाता मे साम्प्रतं देशस्यास्योपरि तदन्यत्र यास्यामि । हिरण्यक आह—भद्र ! किं विरक्तेः कारणम् ? स आह—भद्र ! श्रूयताम् । अत्र देशे महत्याऽनावृष्ट्या दुर्भिक्षं संजातम् । दुर्भिक्षत्वाज्जनो बुभुक्षापीडितः कोऽपि [3] बलिमात्रमपि न प्रयच्छति । अपरं गृहे गृहे बुभुक्षितजनैर्विहङ्गानां [4] बन्धनाय पाशाः [5] प्रगुणीकृताः सन्ति । अहमप्यायुःशेषतया पाशेन बद्धः [6] उद्धारितोऽस्मि । एतद्विरक्तेः कारणम् । तेनाहं विदेशं चलित इति बाष्पमोक्षं करोमि । हिरण्यक आह—अथ भवान् क्व प्रस्थितः ? स आह—अस्ति दक्षिणापथे [7] वनगहनमध्ये महासरः । तत्रत्वत्तोऽधिकः परमसुहृत्कूर्मो मन्थरको नाम । स च मे मत्स्यमांसखण्डानि दास्यति । तद्भक्षणात्तेन सह सुभाषितगोष्ठीसुखमनुभवन्सुखेन कालं नेष्यामि नाहमत्र विहङ्गानां पाशबन्धनेन क्षयं द्रष्टुमिच्छामि । उक्तञ्च—

अनावृष्टिहते देशे सस्ये च प्रलयं गते ।
धन्यास्तात ! न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ५६ ॥

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ५७ ॥

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ५८ ॥

हिरण्यक आह—यद्येवं तदहमपि त्वया सह गमिष्यामि ममापि महद् दुःखं वर्तते । वायस आह—भोः ! तव किं दुःखम् ? तत्कथय । हिरण्यक आह—भो ! बहु वक्तव्यमस्त्यत्र विषये । तत्रैव गत्वा सर्वं

१. तस्य सत्कारेण प्रसन्न इति यावत् । २. सम्भूयालापरूपाम् ।
३. पूजोत्तरं काकेभ्यो देयमन्नमागमपीति यावत् । ४. पक्षिणाम् ।
५. प्रसारिताः । ६. कथमपि मुक्त इत्यर्थः । ७. गहने वन इत्यर्थः ।

सविस्तरं कथयिष्यामि । वायस आह—अहं [1]तावदाकाशगतिः, तत्क
भवतो मया सह गमनम् ? स आह—यदि मे प्राणान् रक्षसि तदा स्वा
पृष्ठमारोप्य मां तत्र प्रापय, नान्यथा मम गतिरस्ति । तच्छ्रुत्वा सान
वायस आह—यद्येवं नद्धन्योऽहं यद्भवतापि सह तत्र कालं नयामि । अ
[2] सम्पातादिकानष्टावुड्डीनगतिविशेषान्वेद्मि तत्समारोह मम पृष्ठ
येन सुखेन त्वां तत्सरः प्रापयामि । हिरण्यक आह—उड्डीना
नामानि श्रोतुमिच्छामि । स आह—

सम्पातं विप्रपातं च महापातं निपातनम् ।
वक्रं तिर्यक् तथा चोर्ध्वमष्टमं लघुसंज्ञकम् ॥ ५९ ॥

तच्छ्रुत्वा हिरण्यकस्तत्क्षणादेव तदुपरि समारूढः । सोऽपि शनै
शनैस्तमादाय [3] सम्पातोड्डीनप्रस्थितः सन् क्रमेण तत्सरः प्राप्तः । तत
लघुपतनकं मूषकाधिष्ठितं विलोक्य दूरतोऽपि [4]देशकालविदसामान्
काकोऽयमिति ज्ञात्वा सत्वरं मन्थरको जले प्रविष्टः । लघुपतनकोऽपि
तीरस्थतरुकोटरे हिरण्यकं [5] मुक्त्वा शाखाग्रमारुह्य तारस्वरेण प्रोवाच-
भो! मन्थरक! आगच्छागच्छ तव मित्रमहं लघुपतनको नाम वायसश्चि
रात्सोत्कण्ठः समायातः तदागत्यालिङ्गय माम् । उक्तं च—

किं चन्दनैः सकर्पूरैस्तुहिनैः किं च शीतलैः ।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥ ६० ॥

तथा च—केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदां च परित्राणं शोकसन्तापभेषजम् ॥ ६१ ॥

तच्छ्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य पुलकित
तनुरानन्दाश्रुपूरितनयनो मन्थरकः प्रोवाच—एह्येहि मित्र ! आलिङ्गय
माम् [6]चिरकालान्मया त्वं न सम्यक्परिज्ञातस्तेनाहं सलिलान्तः प्रविष्टः ।
उक्तं च—यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम् ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥ ६२ ॥

१. गगनचारी । २. सम्पातप्रभृतीन् उड्डयनप्रकारान् ।
३. सम्पाताख्येनोड्डयनभेदेनेत्यर्थः ।
४. देशकालज्ञः सुचतुर इति यावत् ५. उपवेश्येत्यर्थः ।
६. बहोः कालात्पूर्वं दृष्टत्वादिति भावः ।

एवमुक्ते लघुपतनको वृक्षादवतीर्य तमालिङ्गितवान्। अथवा साध्विदमुच्यते—

अमृतस्य प्रवाहैः किं कायक्षालनसम्भवैः।
चिरान्मित्रपरिष्वङ्गो योऽसौ मूल्यविवर्जितः ॥ ६३ ॥

एवं द्वावपि तौ विहितालिङ्गनौ परस्परं पुलकितशरीरौ वृक्षादधः समुपविष्टौ प्रोचतुरात्मचरित्रवृत्तान्तम्[१]। हिरण्यकोऽपि मन्थरस्य प्रणामं कृत्वा वायसाभ्याशे समुपविष्टः। अथ तं तमालोक्य मन्थरको लघुपतनकमाह—भोः! कोऽयं मूषकः? कस्मात्त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्यानीतः? तन्नात्र स्वल्पकारणेन भाव्यम्। तच्छ्रुत्वा लघुपतनक आह—भोः! हिरण्यको नाम मूषकोऽयं मम सुहृद् द्वितीयमिव जीवितम्। तत्किं बहुना—

पर्जन्यस्य यथा धारा यथा च दिवि तारकाः।
सिकतारेणवो यद्वत्संख्यया परिवर्जिताः ॥ ६४ ॥

गुणाः संख्यापरित्यक्तास्तद्वदस्य महात्मनः।
परं निर्वेदमापन्नः सम्प्राप्तोऽयं तवान्तिकम् ॥ ६५ ॥

मन्थरक आह—'किमस्य वैराग्यकारणम्? वायस आह—पृष्टो मया परमनेनाभिहितम्, यद् बहु वक्तव्यमस्ति तत्तत्रैव गत्वा कथयिष्यामि।। ममापि न निवेदितम्। तद्भद्र! हिरण्यक! इदानीं निवेद्यतामुभयोरप्यावयोस्तदात्मनो वैराग्यकारणम्।

सोऽब्रवीत्—

## कथा (१)

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरे[२]मठायतनं भगवतः श्रीमहादेवस्य। तत्र च ताम्रचूडो नाम[३] परिव्राजकः प्रतिवसति स्म। स च नगरे भिक्षाटनं कृत्वा प्राणयात्रां समाचरति। भिक्षाशेषं च तत्रैव भिक्षापात्रे निधाय तद्भित्तापात्रं[४] नागदन्तेऽवलम्ब्य पश्चाद्रात्रौ स्वपिति। प्रत्यूषे च तदन्नं कर्मकराणां दत्त्वा

१. स्वं स्वं वृत्तान्तम्। २. आलयो मन्दिरमित्यर्थः। ३. संन्यासी। ४. वस्त्रादिस्थापनार्थं गृहभित्तिनिखाते दारुमये दण्डे (खूंटी) इति लोके।

  

सम्यक् तत्रैव देवतायतने [1]सम्मार्जनोपलेपनमण्डनादिकं समाज्ञापय-ति । अन्यस्मिन्नहनि मम वान्धवैर्निवेदितम्–स्वामिन् ! मठायतने सिद्ध-मन्नं मूषकभयात्तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदै-तद्वयं भक्षयितुं न शक्नुमः । स्वामिनः पुनरगम्यं किमपि नास्ति । तत्कि वृथाटनेनान्यत्र । अद्य तत्र गत्वा यथेच्छं भुञ्जामहे प्रसादात् । तदाक-र्ण्याहं सकलयूथपरिवृतस्तत्क्षणादेव तत्र गतः । उत्पत्य च तस्मिन् भिक्षा-पात्रे समारूढः । तत्र भक्ष्यविशेषाणि सेवकानां दत्त्वा पश्चात्स्वयमेव भक्षयामि । सर्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामि । एवं नित्यमेव तदन्नं भक्षयामि । परिव्राजकोऽपि यथाशक्ति रक्षति परं यदैव [2]निद्रा-न्तरितो भवति तदाहं तत्रारुह्यात्मकृत्यं करोमि । अथ कदाचित्तेन मम त्रासार्थं महान्यत्नः कृतः । जर्जरवंशः समानीतस्तेन सुप्तोऽपि मम भया-द्भिक्षापात्रं ताडयति । अहमप्यभक्षितेऽप्यन्ने प्रहारभयादपसर्पामि । एवं तेन सह सकलां रात्रिं [3]विग्रहपरस्य कालो व्रजति । अथान्यस्मिन्नहनि तस्य मठे बृहत्स्फिङ्नामा परिव्राजकस्तस्य सुहृत् तीर्थयात्राप्रसङ्गेन पान्थः [4]प्राघुणिकः समायातः । तं दृष्ट्वा प्रत्युत्थानविधिना [5]सम्भाव्य [6]प्रतिपत्तिपूर्वकम् [7]अभ्यागतक्रियया नियोजितः । ततश्च रात्रावेकत्र [8]कुशसंस्तरे द्वावपि प्रसुप्तौ धर्मकथां कथयितुमारब्धौ । अथ बृहत्स्फिक्क-थागोष्ठीषु स ताम्रचूडो मूषकत्रासार्थं [9]व्याक्षिप्तमना जर्जरवंशेन भिक्षा-पात्रं ताडयंस्तस्य शून्यं प्रतिवचनं प्रयच्छति तन्मयो न किञ्चिदुदाहरति । अथासावभ्यागतः परं कोपमुपागतस्तमुवाच—भोस्ताम्रचूड ! परिज्ञात-स्त्वं सम्यङ् न सुहृत् तेन मया सह साह्लादं न जल्पसि तद्रात्रावपि त्वदीयं मठं त्यक्त्वाऽन्यत्र मठे यास्यामि । उक्तं च—

> एह्यागच्छ समाश्रयासनमिदं कस्माच्चिराद् दृश्यते
> का वार्ता ह्यतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात् ।
> एवं ये समुपागतान्प्रणयिनः प्रह्लादयन्त्यादरा-
> त्तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥ ६६ ॥

---

१. सम्मार्जनादीनि कार्याणि कर्तुमित्यर्थः । २. सुप्तः । ३. युद्धं कुर्वतः । ४. अतिथिः । ५. सत्कृत्य । ६. आदरपूर्वकम् । ७. अतिथिसमुचितसत्कारेण । ८. कुशनिर्मितविष्टरे । ९. आकृष्टमानसः ॥

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः ।
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः ॥ ६७ ॥
नाभ्युत्थानक्रिया यत्र नालापा मधुराक्षराः ।
गुणदोषकथा नैव तत्र हर्म्ये न गम्यते ॥ ६८ ॥

[1]तदेकमठप्राप्त्यापि त्वं गर्वितः । त्यक्तः सुहृत्स्नेहः । नैतद्वेत्सि यत्त्वया मठाश्रयव्याजेन [2]नरकोपार्जनं कृतम् । उक्तं च—

नरकाय मतिस्ते चेत्पौरोहित्यं समाचर ।
वर्षं यावत्किमन्येन मठचिन्तां दिनत्रयम् ॥ ६९ ॥

तन्मूर्ख ! शोचितव्यस्त्वं गर्वं गतः । तदहं त्वदीयं मठं परित्यज्य यास्यामि । अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूडस्तमुवाच—भो ! भगवन् ! मैवं वद न त्वत्समोऽन्यो मम सुहृत्कश्चिदस्ति परं तच्छ्रूयतां [3]गोष्ठीशैथिल्यकारणम्—एष दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्रमुत्प्लुत्यारोहति । भिक्षाशेषं च तत्रस्थं भक्षयति [4]तद्भावादेव मठे [5]मार्जनक्रियापि न भवति । तन्मूषकत्रासार्थमेतेन वंशेन भिक्षापात्रं मुहुर्मुहुस्ताडयामि नान्यत्कारणमिति । अपरमेतत्कुतूहलं पश्यास्य दुरात्मनो यन्मार्जारमर्कटादयोऽपि तिरस्कृता अस्योत्पतनेन । बृहत्स्फिगाह—अथ ज्ञायते तस्य बिलं कस्मिंश्चित्प्रदेशे ?। ताम्रचूड आह—भगवन् ! न वेद्मि सम्यक् । स आह—नूनं [6]निधानस्योपरि तस्य बिलम् । निधानोष्मणा प्रकूर्दते । उक्तञ्च—ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम् ।

किं पुनस्तस्य सम्भोगस्त्यागकर्मसमन्वितः ॥ ७० ॥

तथा च—नाकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलान् ।

लुञ्चितानितरैर्येन हेतुरत्र भविष्यति ॥ ७१ ॥

ताम्रचूड आह—कथमेतत् स आह—

---

१. एकस्य मन्दिरस्याधिपत्येनैवेत्यर्थः । २. नरकस्य प्राप्तिः ।
३. परस्परवार्तालापविरक्तेः कारणम् । ४. मूषकस्यावस्थानादेवेत्यर्थः ।
५. सम्मार्जनादिकार्य्यमिति भावः । ६. निधेः ।

# कथा (२)

यदाहं कस्मिंश्चित्स्थाने [1]प्रावृट्काले व्रतग्रहणनिमित्तं कञ्चिद् ब्राह्मणं वासार्थं प्रार्थितवान् । ततश्च [2]तद्वचनात्तेनापि [3]शुश्रूषितः सुखेन देवार्चनपरस्तिष्ठामि। अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धोऽहं ब्राह्मणब्राह्मणी-संवादे [4]दत्तावधानः शृणोमि। तत्र ब्राह्मण आह—ब्राह्मणि ! प्रभाते दक्षिणायनसंक्रान्तिरनन्तदानफलदा भविष्यति तदहं प्रतिग्रहार्थं ग्रामान्तरं यास्यामि । त्वया ब्राह्मणस्यैकस्य भगवतः [5]सूर्यस्योद्देशेन किञ्चिद्भोजनं दातव्यम् इति। अथ तच्छ्रुत्वा ब्राह्मणी परुषतरवचनैस्तं [6]भर्त्सयमाना प्राह—कुतस्ते दारिद्र्योपहतस्य भोजनप्राप्तिः ? तत्किं न लज्जसे एवं ब्रुवाणः। अपि च न मया तव [7]हस्तलग्नया क्वचिदपि लब्धं सुखम्, न मिष्टान्नस्यास्वादनम्, न च हस्तपादकण्ठादिभूषणम्, तच्छ्रुत्वा भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह—ब्राह्मणि ! नैतद्युज्यते वक्तुम् । उक्तञ्च—

ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ।। ७२ ।।

ईश्वरा भूरिदानेन यल्लभन्ते फलं किल ।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतिः ।। ७३ ।।

दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्धयो ।
कूपोऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः ।। ७४ ।।

तथा च—अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन ।
गोप्तारं न निधीनां कथयन्ति महेश्वरं विबुधाः ।। ७५ ।।

अपि च—सदा दानपरिक्षीणः शस्त एव करीश्वरः ।
अदानः पीनगात्रोऽपि निन्द्य एव हि गर्दभः ।। ७६ ।।

सुशीलोऽपि सुवृत्तोऽपि यात्यदानादधो घटः ।
पुनः कुब्जापि काणापि दानादुपरि कर्कटी ।। ७७ ।।

यच्छञ्जलमपि जलदो वल्लभतामेति सकललोकस्य ।

---

१. वर्षाकाले । २. मम प्रार्थनावचनादित्यर्थः ।
३. आहृतः । ४. दत्तचित्त इति भावः । ५. सूर्यदेवप्रीत्यर्थमित्यर्थः ।
६. तर्जयन्ती । ७. गृहागतयेत्यर्थः ।

नित्यं प्रसारितकरो मित्रोऽपि न विक्षितुं शक्यः ॥ ७८ ॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात्स्वल्पतरं काले पात्रे च देयम् । उक्तञ्च—

सत्पात्रे महती श्रद्धा देशे काले यथोचिते ।
यद्दीयते विवेकज्ञैस्तदानन्त्याय कल्पते ॥ ७९ ॥

तथा च—अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत् ।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥ ८० ॥

ब्राह्मण्याह—कथमेतत् । स आह—

## कथा (३)

अस्ति कस्मिंश्चिद्वनोद्देशे कश्चित्पुलिन्दः[१] । स च [२]पापर्द्धिं कर्तुं वनं प्रति प्रस्थितः । अथ तेन [३]प्रसर्पता महानञ्जनपर्वतशिखराकारः[४] क्रोडः[५] समासादितः । तं दृष्ट्वा [६]कर्णान्ताकृष्टनिशितसायकेन [७]समाहतः । तेनापि कोपाविष्टेन चेतसा बालेन्दुद्युतिना दंष्ट्राग्रेण पाटितोदरः पुलिन्दो गतासुर्भूतले न्यपतत् । अथ लुब्धकं व्यापाद्य शूकरोऽपि [८]शरप्रहारवेदनया [९]पञ्चत्वं गतः । एतस्मिन्नन्तरे कश्चिदासन्नमृत्युः शृगाल इतस्ततो निराहारतया पीडितः परिभ्रमंस्तं प्रदेशमाजगाम । यावद्वराहपुलिन्दौ द्वावपि पश्यति तावत् प्रहृष्टो व्यचिन्तयत्—भोः ! [१०]सानुकूलो मे विधिः तेनैवैतदचिन्तितं भोजनमुपस्थितम् । अथवा साध्विदमुच्यते—

अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम् ।
शुभाशुभं समभ्येति विधिना संनियोजितम् ॥ ८१ ॥

तथा च—यस्मिन्देशे च काले च वयसा यादृशेन च ।
कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते ॥ ८२ ॥

तदहं तथा भक्षयामि यथा बहून्यहानि मे प्राणयात्रा भवति तत्तावदेनं स्नायुपाशं धनुष्कोटिगतं भक्षयामि ।

---

१. म्लेच्छजातीयो मनुष्यो लुब्धक इति यावत् । २. आखेटमित्यर्थः ।
३. वने विचरता । ४. कृष्णवर्णमहाकायः । ५. शूकरः ।
६. कर्णपर्यन्ताकृष्टतीक्ष्णशरेण । ७. प्रहृतः । ८. शरप्रहारजनितकष्टेनेत्यर्थः ।
९. मृतः । १०. सकरुणः इत्यर्थः ।

उक्तं च— शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् ।
रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ८३ ॥

इत्येवं मनसा निश्चित्य [1]चापचटितकोटिं मुखमध्ये प्रक्षि[प्य] स्नायुं भक्षितुं प्रवृत्तः, ततश्च त्रुटिते पाशे तालुदेशं विदार्य चापको[टिः] मस्तकमध्येन निष्क्रान्ता । सोऽपि तद्वेदनया तत्क्षणान्मृतः । अतो[ऽहं] ब्रवीमि—'अतितृष्णा न कर्त्तव्या' इति । स पुनरप्याह—ब्राह्मणि! श्रुतं भवत्या ?

आयुः कर्म च वित्तं च विद्या निधनमेव च ।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ८४ ॥

अथैवं सा तेन प्रबोधिता ब्राह्मण्याह—'यद्येवं तदस्ति मे गृहे [2][स्तो]कस्तिलराशिः । ततस्तिलान् [3]लुञ्चित्वा तिलचूर्णेन ब्राह्मणं भोज[यि]ष्यामि' इति । ततस्तद्वचनं श्रुत्वा ब्राह्मणो ग्रामं गतः । सापि तिलानु[ष्णो]दकेन संमर्द्य कुटित्वा सूर्यातपे दत्तवती । अत्रान्तरे तस्या गृहकर्मव्य[ग्र]यास्तिलानां मध्ये कश्चित् [4]सारमेयो मूत्रोत्सर्गं चकार । तं दृष्ट्वा [सा] चिन्तितवती—'अहो ! नैपुण्यं पश्य पराङ्मुखीभूतस्य [5]विधेः, य[दे]ते तिला अभोज्याः कृताः । तदहमेतान्समादाय कस्यचिद् गृहं गत्वा लुञ्चि[तै]रलुञ्चितानानयामि सर्वोऽपि जनोऽनेन विधिना प्रदास्यति' इति । [अथ] यस्मिन् गृहेऽहं भिक्षार्थं प्रविष्टस्तत्र गृहे सापि तिलादानाय प्रविष्टा वि[क्रयं] कर्तुम् । आह च—'गृह्णातु कश्चिदलुञ्चितैर्लुञ्चितांस्तिलान्' । अथ तद्गृ[ह]गृहिणी गृहं प्रविष्टा यावदलुञ्चितैर्लुञ्चितान् गृह्णाति तावदस्याः पु[त्रेण] [6]कामन्दकीयशास्त्रं दृष्ट्वा' व्याहृतम्—'मातः । अग्राह्याः खल्विमे ति[लाः] नास्या अलुञ्चितैर्लुञ्चिता ग्राह्याः । कारणं किञ्चिद्भविष्यति तेनैषाऽलु[ञ्चि]तैर्लुञ्चितान् प्रयच्छति' । तच्छ्रुत्वा तया परित्यक्तास्ते तिलाः । अतो[ऽहं] ब्रवीमि—'नाकस्माच्छाण्डिली मातः' इति । एतदुक्त्वा स भूयो[ऽपि] प्राह—अथ ज्ञायते तस्य [7]क्रमणमार्गः ? ताम्रचूड आह—भगव[न्!] ज्ञायते यत एकाकी न समागच्छति किंत्वसंख्ययूथपरिवृतः पश्यत[ः]

१. धनुषः खण्डितमग्रभागम् । २. अल्पास्तिला इत्यर्थः । ३. कण्डयि[त्वा] ।
४. श्वा । ५. भाग्यस्य । ६. नीतिशास्त्रमित्यर्थः । ७. आगमनस्य प[न्थाः] ।

परिभ्रमन्नितस्तः सर्वजनेन सहागच्छति याति च। अभ्यागत आह—अस्ति किंचित् खनित्रकम्[1] ? स आह—बाढमस्ति। एषा सर्वलोहमयी [2]स्वहस्तिका। अभ्यागत आह—तर्हि प्रत्यूषे त्वया मया सह स्थातव्यं तेन द्वावपि [3]जनचरणामलिनायां भूमौ तत्पादानुसारेण गच्छावः मयापि तद्वचनमाकर्ण्य चिन्तितम्—अहो! विनष्टोऽस्मि यतोऽस्य [4]साभिप्रायवचांसि श्रूयन्ते। नूनं यथा [5]निधानं तथा दुर्गमप्यस्माकं ज्ञास्यति। एतदभिप्रायादेव ज्ञायते। उक्तञ्च—

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ॥ ८५ ॥

वाञ्छैव सूचयति पूर्वतरं भविष्यं
पुंसां यदन्यतनुजं त्वशुभं शुभं वा।
विज्ञायते शिशुरजातकलापचिह्नः
प्रत्युद्गतैरपसरन् सरसः कलापी ॥ ८६ ॥

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्यज्यान्यमार्गेण गन्तुं प्रवृत्तः सपरिजनो यावदग्रतो गच्छामि तावत्सम्मुखो बृहत्कायो मार्जारः सामायाति। स च मूषकवृन्दमवलोक्य तन्मध्ये सहसोत्पपात। अथ ते मूषका मां कुमार्गगामिनवलोक्य [6]गर्हयन्तो हतशेषा [7]रुधिरप्लावितवसुन्धरास्तमेव दुर्गं प्रविष्टाः। अथवा साध्विदमुच्यते—

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात्।
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन्मृगः
कूपान्तःपतितः करोतु विधुरे किंवा विधौ पौरुषम् ॥ ८७ ॥

अथाहमेकोऽन्यत्र गतः, शेषा मूढतया तत्रैव दुर्गे प्रविष्टाः। अत्रान्तरे स दुष्टपरिव्राजको [8]रुधिरविन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेणागत्योपस्थितः। ततश्च स्वहस्तिकया खनितुमारब्धः। अथ तेन खनता

---

१. भूखननसाधनं लोहमयम् ( कुद्दाली )। २. खनित्रम्।
३. लोकानां पादप्रक्षेपैरक्षुण्णायां जनसञ्चारात्पूर्वमेवेत्यर्थः।
४. भावविशेषसूचकानि। ५. निधिः। ६. निन्दन्तः।
७. रक्तसिक्तभूमयः। ८. निपतितरक्तबिन्दुम्।

प्राप्तं तन्निधानं यस्योपरि सदैवाहं कृतवसतिर्यस्योष्मणा[1] महादुर्गमं गच्छामि ततो हृष्टमनास्ताम्रचूडमिदमूचेऽभ्यागतः—'भो भगवन् इदानीं स्वपिहि निःशङ्कः, अस्योष्मणा मूषकस्ते जागरणं सम्पादयति' एवमुक्त्वा निधानमादाय मठाभिमुखं प्रस्थितौ द्वावपि। अहमपि याव न्निधानरहितं स्थानमागच्छामि, तावदरमणीयमुद्वेगकारकं तत्स्थानं वी क्षितुमपि न शक्नोमि। अचिन्तयश्च—'किं करोमि क गच्छामि कथं मे स्यान्मनसः प्रशान्तिः'। एवं चिन्तयतो महाकष्टेन स दिवसो व्यति क्रान्तः। अथास्तमितेऽर्के सोद्वेगो निरुत्साहस्तस्मिन्मठे सपरिवारः प्रविष्टः। [2]अथास्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः। अथासावभ्यागतः प्राह—'सखे! किमद्यापि निःशङ्को न निद्रां गच्छसि?' स आह—'भगवन्! भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः। तद्भयाज्जर्जरवंशेन भिक्षापात्रं ताडयामि। ततो विहस्याभ्यागतः प्राह—सखे! मा भैषीः वित्तेन सह गतोऽस्य कूर्दनोत्साहः। सर्वेषामपि जन्तूनामियमेव स्थितिः। उक्तं च—

> यदुत्साही सदा मर्त्यः पराभवति यज्जनान्।
> यदुद्धतं वदेद्वाक्यं तत्सर्वं वित्तजं बलम्॥ ८८॥

अथाहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः। तच्छ्रुत्वासौ मे शत्रुर्विहस्य ताम्रचूडमुवाच—भोः! पश्य पश्य कौतूहलम्! आह च—

> अर्थेन बलवान् सर्वोऽप्यर्थयुक्तः स पण्डितः।
> पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम्॥ ८९॥

तत् स्वपिहि त्वं गतशङ्कः। यदस्योत्पतनकारणं तदावयोर्हस्तगतं जातम्। अथवा साध्विदमुच्यते—

> दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
> तथार्थेन विहीनोऽत्र पुरुषो नामधारकः॥ ९०॥

तच्छ्रुत्वाहं मनसा विचिन्तितवान्—यतोऽङ्गुलिमात्रमपि कूर्दनाशक्तिर्नास्ति तद्धिगर्थहीनस्य पुरुषस्य जीवितम्। उक्तं च—

---

१. प्रभावेणेत्यर्थः।
२. अस्मदीयसहचराणां शब्दम्।

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा॥ ९१॥

यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः॥ ९२॥

सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणाः।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी॥ ९३॥

न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः।
यथा द्रव्याणि सम्प्राप्य तैर्विहीनः सुखे स्थितः॥ ९४॥

शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वतः।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः॥ ९५॥

शङ्कनीया हि सर्वत्र निष्प्रतापा दरिद्रता।
उपकर्तुमपि प्राप्तं निःस्वं सन्त्यज्य गच्छति॥ ९६॥

व्यक्तेऽपि वासरे नित्यं दौर्गत्यतमसावृतः।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते॥ ९७॥

एवं विलप्याहं भग्नोत्साहस्तन्निधानं [1]गण्डोपधानीकृत दृष्ट्वा स्वं दुर्गं प्रभाते गतः। ततश्च मद्भृत्याः प्रभाते गच्छन्तो मिथो जल्पन्ति— अहो! असमर्थोऽयमुदरपूर्णेऽस्माकम्। केवलमस्य [2]पृष्ठलग्नानां [3]बिडालादि-विपत्तयः। तत्किमनेनाराधितेन। उक्तं च—

यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः॥ ९८॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोऽहम्। यावन्नो कश्चिन्मम सम्मुखेऽभ्येति तावन्मया चिन्तितम् 'धिगित्थं दरिद्रता'।

एवं मे चिन्तयस्ते भृत्या मम शत्रूणां सेवका जाताः। ते च मामेकाकिनं दृष्ट्वा [4]विडम्बनां कुर्वन्ति। अथ मयैकाकिना [5]योगनिद्रां गतेन भूयो विचिन्तितम्—यत्तस्य कुतपस्विनः [6]समाश्रयं गत्वा [7]तद्गण्डो-

१. कपोलाधोभागे निहितं परिव्राजकेनेति शेषः।
२. एनमनुगच्छतामस्माकमिति भावः। ३. मार्जारादिकृताक्रमणजाता आपदः।
४. उपहासं तिरस्कारं वा। ५. निद्राया अभावेऽपि नयने निमीलयता।
६. वासस्थानम्। ७. परिव्राजकस्य कपालाधःस्थिताम्।

पधानवर्तिकृतां [1]वित्तपेटां शनैः शनैर्विदार्य तस्य निद्रावशङ्गतस्य स्वदुर्गे तद्वित्तमानयामि, येन भूयोऽपि मे वित्तप्रभावेणाधिपत्यं पूर्ववद्भविष्यति। उक्तं च—

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः।
नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव ॥ ९९ ॥
दौर्गत्यं देहिनां दुःखमपमानकरं परम्।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥ १०० ॥
दैन्यस्य पात्रतामेति पराभूतेः परं पदम्।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषी कृतः ॥ १०१ ॥
लज्जन्ते बान्धवास्तेन सम्बन्धं गोपयन्ति च।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ १०२ ॥
मूर्तं लाघवमेवैतदपायानामिदं गृहम्।
पर्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥ १०३ ॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः।
दीपखद्योतजायेव त्यज्यते निर्धनो जनः ॥ १०४ ॥
शौचावशिष्टयाप्यस्ति किंचित्कार्यं क्वचिन्मृदा।
निर्धनेन जनेनैव न तु किञ्चित्प्रयोजनम् ॥
अधनो दातुकामोऽपि सम्प्राप्तो धनिनां गृहम्।
मन्यते याचकोऽयं धिग् दारिद्र्यं खलु देहिनाम् ॥ १०५ ॥

अतो वित्तापहारं विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम्।

उक्तञ्च—स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः।
पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ १०६ ॥

तथा च—गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥ १०७ ॥

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां मया छिद्रं कृतं यावत्, तावत्प्रबुद्धो दुष्टतापसः। ततश्च जर्जरवंप्रहारेण शिरसि ताडितः कथञ्चिदायुःशेषतया निर्गतोऽहम्, न मृतश्च।

१. वित्तपेटिकाम्।

तदेतत्सकलं सुखदुःखमनुभूय परं विषादमुपागतोऽनेन मित्रेण त्वत्सकाशमानीतः; तदेतन्मे वैराग्यकारणम्। मन्थरक आह—भद्र! भवति [1]सुहृद्‌द्वयमसन्दिग्धं, यत् क्षुत्क्षामोऽपि [2]शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठमारोप्यानयति न मार्गेऽपि भक्षयति। उक्तं च यतः—

विकारं याति नो चित्तं वित्ते यस्य कदाचन।
मित्रं स्यात्सर्वकाले च कारयेन्मित्रमुत्तमम्॥ १०८॥
विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम्।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः॥ १०९॥

तथा च—आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद्भवेत्॥ ११०॥

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो यतो [3]नीतिविरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम्। अथवा साध्विदमुच्यते—

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत्।
दृश्यते मित्रविध्वस्तात्कार्याद्वैरी परीक्षितः॥ १११॥

तत्स्वागतं भवतः। स्वगृहवदास्यतामत्र सरस्तीरे। यच्च वित्तनाशो विदेशवासश्च ते सञ्जातस्तत्र विषये सन्तापो न कर्तव्यः। उक्तञ्च—

सुसञ्चितैर्जीवनवत्सुरक्षितैर्निजेऽपि देहे न नियोजितैः क्वचित्।
पुंसो यमान्तं व्रजतोऽपि निष्ठुरैरेतैर्धनैः पञ्चपदी न दीयते॥ ११२॥

अन्यच्च—यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान्॥ ११३॥
निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः।
निर्धनः प्राप्तदोषोऽपि सर्वत्र निरुपद्रवः॥ ११४॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे।
नाशे दुःखं व्यये दुःखं धिगर्थान् कष्टसंश्रयान्॥ ११५॥
अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात्॥ ११६॥

---

१. एष काकस्तव मित्रमित्यत्र नास्ति कोऽपि संदेह इत्यर्थः।
२. आहारभूतम्।
३. असङ्गतेति यावत्।

अपरं विदेशवाजमपि वैराग्यं त्वया न कार्यम्। यतः—

को धीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।
यद्दंष्ट्रानखलाङ्गुलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥११७॥

अर्थहीनः परे देशे गतोऽपि यः प्रज्ञावान् भवति स कथंचिदपि न सीदति। उक्तं च—

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ११८ ॥

[1]तत्प्रज्ञानिधिर्भवान् न [2]प्राकृतपुरुषतुल्यः। अथवा—

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥११९॥

अपरं प्राप्तोऽप्यर्थः [3]कर्मप्राप्त्या नश्यति। तदेतावन्ति दिनानि त्वदीयमासीत्। मुहूर्तमप्यनात्मीयं[4] भोक्तुं न लभ्यते। स्वयमागतमपि विधिनापह्रियते[5]।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १२० ॥

हिरण्यक आह—कथमेतत् स आह—

## कथा (४)

कस्मिंश्चिदधिष्ठाने सोमिलको नाम [6]कौलिको वसति स्म। स चानेकविधपट्टरचनारञ्जितानि पार्थिवोचितानि [7]वस्त्राण्युत्पादयति। परं तस्य चानेकविधपट्टरचनानिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमप्यर्थमात्रं सम्पद्यते। अन्यथान्ये तत्र सामान्यकौलिकाः [8]स्थूलवस्त्रसम्पादनविज्ञानिनो [9]महर्द्धिसम्पन्नाः। तानवलोक्य स स्वभार्यामाह—

---

१. अत्यन्तबुद्धिमान्। २. साधारणजन इवेत्यर्थः।
३. अशुभकर्मवशादिति यावत्। ४. परकीयम्।
५. आच्छिद्यत इति भावः। ६. तन्तुवायः ७. वयति।
८. साधारणवस्त्रनिर्माणकारिणः। ९. महाधनाः सञ्जाताः।

प्रिये! पश्यैतान् स्थूलपट्टकारकान् [1]धनकनकसमृद्धान् [2]तद्धारणकं ममैतत्स्थानम्। तदन्यत्रोपार्जनाय गच्छामि। सा प्राह—भोः! प्रियतम! [3]मिथ्याप्रलपितमेतद्यदन्यत्र गतानां धनं भवति स्वस्थाने न भवतीति। उक्तं च—

उत्पतन्ति यदाकाशे निपतन्ति महीतले।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति॥ १२१॥

तथा च—

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति॥ १२२॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पुराकृतं कर्म कर्तारमनुगच्छति॥ १२३॥

शेते सह शयानेन गच्छन्तमनुगच्छति।
नराणां प्राक्तनं कर्म तिष्ठत्यथ सहात्मना॥ १२४॥

यथा छायातपौ नित्यं सुसम्बद्धौ परस्परम्।
एवं कर्म च कर्ता च संश्लिष्टावितरेतम्॥ १२५॥

तस्मादत्रैव [4]व्यवसायपरो भव। कौलिक आह—प्रिये! न सम्यगभिहितं भवत्या। व्यवसायं विना कर्म न [5]फलति। उक्तञ्च—

यथैकेन न हस्तेन तालिका सम्प्रपद्यते।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम्॥ १२६॥

पश्य कर्मवशात्प्राप्तं भोज्यकालेऽपि भोजनम्।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन॥ १२७॥

तथा च—उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः॥ १२८॥

तथा च—उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथाः।
नहि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः॥ १२९॥

---

१. समृद्धिशालिनः। २. धनप्राप्तेरयोग्यमित्यर्थः।
३. असत्यमिति यावत्। ४. परिश्रमपरः। ५. फलं ददाति।

उद्यमेन विना राजन्न सिद्धयन्ति मनोरथाः ।
कातरा इति जल्पन्ति यद्भाव्यं यद्भविष्यति ॥ १३० ॥
स्वशक्त्या कुर्वतः कर्म न चेत्सिद्धिं प्रयच्छति ।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥ १३१ ॥

तन्मयावश्यं देशान्तरं गन्तव्यम्, इति निश्चित्य वर्धमानपुरं गतः। तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः। अथार्धपथे गच्छतस्तस्य कदाचिदटव्यां पर्यटतो भगवान् रविरस्तमुपागतः। तदासौ [1]व्यालभयात्स्थूलतरवटस्कन्धमारुह्य यावत्प्रसुप्तस्तावन्निशीथे[2] स्वप्ने द्वौ पुरुषौ [3]रौद्राकारौ परस्परं प्रजल्पन्तावश्रृणोत्। अत्रैक आह—'भोः! [4]कर्त्तः त्वं किं सम्यङ् न वेत्सि यदस्य [5]सोमिलकस्य भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति ? तत्किं त्वयाऽस्य सुवर्णशतत्रयं प्रदत्तम्?' स आह—भोः ! कर्मन् ! मयावश्यं दातव्यं [6]व्यवसायिनाम् । तत्र च तस्य [7]परिणतिस्त्वदायत्तेति। अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिमवलोकयति तावद्रिक्तं पश्यति। ततः [8]साक्षेपं चिन्तयामास--अहो ! किमेतत् ! महता कष्टेनोपार्जितं वित्तं [9]हेलया क्वापि गतम्। तद्व्यर्थश्रमोऽकिञ्चनः[10] कथं स्वपत्न्या मित्राणां च मुखं दर्शयिष्यामि, इति निश्चित्य तदेव पत्तनं गतः। तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः। यावदर्धपथे भूयोऽटवीगतस्य भगवान् भानुरस्तं जगाम । अथ सुवर्णनाशभयात्सुश्रान्तोऽपि न विश्राम्यति। केवलं [11]कृतगृहोत्कण्ठः सत्वरं व्रजति। अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ चाश्रृणोत्। तत्रैकः प्राह-भोः! कर्तः! किं त्वयैतस्य सुवर्णशतपञ्चकं प्रदत्तम् ? तत्किं त्वं न वेत्सि यद्भोजनाच्छादनाभ्यधिकमस्य किंचिन्नास्ति । स आह—भोः ! कर्मन् ! मयावश्यं देयं व्यवसायिनाम् । तस्य परिणाम-

१. व्याघ्रादिहिंसकप्राणिभयात् । २. अर्धरात्रे । ३. भयानकौ ४. भगवान् । ५. सोमिलकस्य भाग्य इत्यर्थः । ६. उद्यमवताम् । ७. परिणामो भोग इति यावत् । ८. सदुःखम् । ९. सहसेत्यर्थः । १०. धनहीनः । ११. गृहं गन्तुमुत्सुकः ।

स्त्वदायत्तः, तत्किं मामुपालम्भयसि[1] तच्छ्रुत्वा सोमिलको यावद् ग्रन्थिमवलोकयति तावत्सुवर्णं नास्ति। ततः परं दुःखमापन्नो व्यचिन्तयत्—अहो! किं मम धनरहितस्य जीवितेन। तदत्र वटवृक्ष आत्मानमुद्बध्य प्राणांस्त्यजामि। एवं निश्चित्य [2]दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायामात्मानं निबध्य यावत्प्रक्षिपति तावदेकः पुमानाकाशस्थ एवेदमाह—भो! भोः! सोमिलक! मैवं साहसं कुरु। अहं ते वित्तापहारकः। न ते भोजनाच्छादनाभ्यधिकां वराटिकामपि सहामि, तद्गच्छ स्वगृहं प्रति। अन्यच्च भवदीयसाहसेनाहं तुष्टः। यथा मे न स्याद्व्यर्थं दर्शनं[3] तत्प्रार्थ्यतामभीष्टो वरः कश्चित्। सोमलिक आह–'यद्येवं तद्देहि मे प्रभूतं धनम्' स आह–भोः! किं करिष्यसि भोगरहितेन धनेन? यतस्तव भोजनाच्छदनाभ्यधिका प्राप्तिरपि नास्ति।

सोमिलक आह—यद्यपि तस्य धनस्य भोगो नास्ति तथापि तद्भवतु। उक्तं च—

कृपणोऽप्यकुलीनोऽपि सज्जनैर्वर्जितः सदा।
सेव्यते स नरो लोके यस्य स्याद्वित्तसंचयः॥ १३२॥

तथा च—शिथिलौ च सुबुद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे! दश वर्षाणि पञ्च च॥ १३३॥

पुरुष आह—किमेतत् सोऽब्रवीत्—

## कथा (५)

कस्मिंश्चिदधिष्ठाने तीक्ष्णविषाणो नाम महावृषभः प्रतिवसति स्म। स च मदातिरेकात्परित्यक्तनिजयूथः शृङ्गाभ्यां नदीतटानि विदारयन् स्वेच्छया मरकतसदृशानि शष्पाणि भक्षयन्नरण्यचरो[4] बभूव। अथ तत्रैव वने प्रलोभको नाम शृगालः प्रतिवसति स्म। स कदाचित्स्वभार्यया सह नदीतीरे सुखोपविष्टस्तिष्ठति। अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव [5]पुलिनमवतीर्णः। ततश्च तस्य लम्बमानौ [6]वृषणा-

१. उपालम्भसे निन्दसीति यावत्।
२. कुशमयीम्।
३. त्वया लब्धं मे दर्शनमित्यर्थः।
४. अरण्ये विचचारेत्यर्थः।
५. जलोत्थितं प्रदेशं तटमिति यावत्।
६. अण्डकोषौ।

ववलोक्य शृगाल्या शृगालोऽभितः—स्वामिन् ! पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथास्थितौ तदेतौ क्षणेन प्रहरेण वा पतिष्यतः। एवं ज्ञात्वा भवता [1]पृष्ठानुयायिना भाव्यम्। शृगाल आह—प्रिये ! न ज्ञायते कदाचिदेतयोः पतनं भविष्यति वा न वा। तत्किं वृथा श्रमाय मां नियोजयसि। अत्रस्थस्तावज्जलार्थमागतान् मूषकान् भक्षयिष्यामि समं त्वया, मार्गोऽयं यतस्तेषाम्। अपरं यदि त्वां मुक्त्वास्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि, तदा [2]आगत्यान्यः कश्चिदेतत्स्थानं समाश्रयिष्यति।

नैतद्युज्यते कर्तुम्। उक्तं च—

> यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
> ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ १३४ ॥

शृगाल्याह—भोः ! [3]कापुरुषस्त्वम्। यत्किंचित्प्राप्तं तेनैव सन्तोषं करोषि। उक्तं च—

> सुपूरा स्यात् कुनदिका सुपूरो मूषिकाञ्जलिः।
> सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १३५ ॥

तस्मात्पुरुषेण सदैवोत्साहवता[4] भाव्यम्। उक्तं च—

> यत्रोत्साहसमारम्भो यत्रालस्यविहीनता।
> नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १३६ ॥
> तद्दैवमिति संचिन्त्य त्यजेन्नोद्योगमात्मनः।
> अनुयोगं विना तैलं तिलानां नोपजायते ॥ १३७ ॥

अन्यच्च—यः स्तोकेनापि सन्तोषं कुरुते मन्दधीर्जनः।

> तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ १३८ ॥

यच्च त्वं वदसि, एतौ पतिष्यतो न वेति तदप्युक्तम्। उक्तं च—

> कृतनिश्चयिनो वन्द्यास्तुङ्गिमा न प्रशस्यते।
> चातकः को वराकोऽयं यस्येन्द्रो वारिवाहकः ॥ १३९ ॥

अपरं मूषकमांसस्य [5]निर्विण्णोऽहम्। एतौ च मांसपिण्डौ

---

१. पृष्ठगामिना। २. अत्र आगतेत्यर्थः। ३. अलसः। ४. उद्योगिना।
५. निरन्तरं मूषकमांसस्य भक्षणेन सम्प्रति तत्र मे रुचिर्नास्तीति भावः।

[1]पतनप्रायौ दृश्येते, तत्सर्वथा नान्यथा कर्तव्यमिति । अथासौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णविषाणस्य पृष्ठमन्वगच्छत् । अथवा साध्विदमुच्यते—

तावत्स्यात्सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः ।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ह्रियते बलात् ॥ १४० ॥

अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ १४१ ॥

एवं स तस्य पृष्ठतः सभार्यः परिभ्रमँश्चिरकालमनयत्[2] । न च तयोः पतनमभूत् । ततश्च [3]निर्वेदात्पञ्चदशे वर्षे शृगालः स्वभार्यामाह—

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे ! दश वर्षाणि पञ्च च ॥ १४२ ॥

तयोस्तत्पश्चादपि पातो न भविष्यति तत्तदेव स्वस्थानं गच्छावः । अतोऽहं ब्रवीमि—'शिथिलौ च सुबद्धौ च' इति । पुरुष आह—यद्येवं तद्गच्छ भूयोऽपि वर्धमानपुरम् । तत्र द्वौ वणिक्पुत्रौ वसतः । एको [4]गुप्तधनः, द्वितीयः [5]उपभुक्तधनः । ततस्तयोः [6]स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः । यदि ते धनेन प्रयोजनमभक्षितेन ततस्त्वामपि गुप्तधनं करोमि । अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमीति । एवमुक्त्वाऽदर्शनं गतः । सोमिलकोऽपि विस्मितमना भूयोऽपि वर्धमानपुरं गतः । अथ संध्यासमये श्रान्तः कथमपि तत्पुरं प्राप्तो गुप्तधनगृहं पृच्छन् कृच्छ्राल्लब्ध्वा अस्तमितसूर्ये प्रविष्टः । अथासौ भार्यापुत्रसमेतेन गुप्तधनेन [7]निर्भर्त्स्यमानो हठाद् गृहं प्रविश्योपविष्टः । ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किंचिदशनं दत्तम् । ततश्च भुक्त्वा तत्रैव यावत्सुप्तो निशीथे पश्यति तावत्तावपि द्वौ पुरुषौ परस्परं मन्त्रयतः । तत्रैक आह—भोः ! कर्तः ! किं त्वयास्य गुप्तधनस्यान्योऽधिको [8]व्ययो [9]निर्मितो

---

१. सद्यःपतन्तावित्यर्थः ।
२. बहुकालमतिवाहितवान् ।
३. खेदात् .
४. दानभोगाद्यभावेन सञ्चितधनः ।
५. दानभोगादिना व्ययितवित्तः ।
६. भावमवस्थामिति भावः ।
७. तिरस्क्रियमाणः ।
८. सम्पदित्यर्थः ।
९. निश्चितः ।

यत्सोमिलकस्यानेन भोजनं दत्तम् ? तदयुक्तं त्वया कृतम् । स आह— भोः ! कर्मन् ! न ममात्र दोषो मया पुरुषस्य लाभप्राप्तिर्दातव्या तत्परिणतिः पुनस्त्वदायत्तेति । अथासौ यावदुत्तिष्ठति तावद् गुप्तधनो [1]विपूचिकया खिद्यमानो रुजाभिभूतः क्षणं तिष्ठति । ततो द्वितीयेऽह्नि तद्दोषेण कृतोपवासः संजातः सोमिलकोऽपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहं गतः तेनापि चाभ्युत्थानादिना सत्कृतो [2]विहितभोजनाच्छादनसंमानस्तस्यैव गृहं भव्यशय्यामारुह्य सुष्वाप । ततश्च निशीथे यावत्पश्यति तावत्तावेव द्वौ पुरुषौ मिथो मन्त्रयतः । अथ तयोरेक आह—भोः ! कर्त्तः ! अनेन सोमिलकस्योपकारं कुर्वता प्रभूतो व्ययः कृतः । तत्कथय कथमस्य [3]उद्धारकविधिर्भविष्यति । अनेन सर्वमेतद् [4]व्यवहारकगृहात्समानीतम् । स आह—भोः ! कर्मन् ! मम कृत्यमेतत् । परिणतिस्त्वदायत्तेति । अथ प्रभातसमये राजपुरुषो राजप्रासादजं वित्तमादाय समायात उपभुक्तधनाय समर्पयामास । तद् दृष्ट्वा सोमिलकश्चिन्तयामास—सञ्चयरहितोऽपि वरमेष उपभुक्तधनः नासौ कदर्यो [5]गुप्तधनः ।

तद्विधाता मां दत्तभुक्तधनं करोतु । न कार्यं मे गुप्तधनेन । ततः सोमिलको दत्तभुक्तधनः संजातः । अतोऽहं ब्रवीमि—'अर्थस्योपार्जनं कृत्वा' इति । तद्भद्र ! हिरण्यक ! एवं ज्ञात्वा धनविषये संतापो न कार्यः । अथ विद्यमानमपि धनं [6]भोज्यवन्ध्यतया तदविद्यमानं[7] मन्तव्यम् । उक्तं च—

> गृहमध्यनिखातेन धनेन धनिनो यदि ।
> भवामः किं न तेनैव धनेन धनिनो वयम् ॥ १४३ ॥

तथा च—
> उपार्जितानामर्थानां त्याग एव हि रक्षणम् ।
> तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १४४ ॥
> दातव्यं भोक्तव्यं धनविषये संचयो न कर्तव्यः ।
> पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ १४५ ॥

अन्यच्च—दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।

---

१. रोगविशेषेण । २. भोजनाच्छादनादिना कृतसत्कारः ।
३. उद्धारविधानम् । ४. व्यवसायिनो गृहात् । ५. कृपणः ।
६. भोक्तुमशक्यत्वेन । ७. नष्टमेवेति भावः ।

यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १४६ ॥

एवं ज्ञात्वा विवेकिना न [1]स्थित्यर्थं वित्तोपार्जनं कर्तव्यं यतो दुःखाय तत् उक्तं च—

धनादिकेषु विद्यन्ते येऽत्र मूर्खाः सुखाशया ।
तप्ता ग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनम् ॥ १४७ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ १४८ ॥

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १४९ ॥

पीयूषमिव सन्तोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसन्तोषवतां पुनः ॥ १५० ॥

निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः ॥ १५१ ॥

वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्तते नार्थैः पिपासेवाग्निसेवनैः ॥ १५२ ॥

अनिद्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ॥ १५३ ॥

धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १५४ ॥

दानेन तुल्यो निधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमं न चान्यत्
सन्तोषतुल्यं धनमस्ति नान्यत् ॥ १५५ ॥

दारिद्र्यस्य पराभूतिर्यन्मानद्रविणाल्पता ।
जरद्गवधनः शर्वस्तथापि परमेश्वरः ॥ १५६ ॥

---

[1]. सञ्चयार्थम् ।

सकृत्कन्दुकपातेन पतत्यार्यः पतन्नपि।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ १५७॥

एवं ज्ञात्वा भद्र! त्वया सन्तोषः कार्यः' इति। मन्थरकवचनमाकर्ण्य वायस आह—मन्थरको यदेवं वदति तत्त्वया चित्ते कर्त्तव्यम्। अथवा साध्विदमुच्यते-

सुलभाः पुरुषा राजन्! सततं प्रियवादिनः।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः॥ १५८॥
अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः॥ १५९॥

अथैवं जल्पतां तेषां चित्राङ्गो नाम हरिणो [1]लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः। अथायान्तं ससम्भ्रमवलोक्य लघुपतनको वृक्षमारूढः। हिरण्यको निकटवर्तिनं [2]शरस्तम्बं प्रविष्टः। मन्थरकः सलिलाशयमास्थितः। अथ लघुपतनको मृगं सम्यक्परिज्ञाय मन्थरकमुवाच-एह्येहि सखे! मन्थरक! मृगोऽयं तृषार्तोऽत्र समायातः सरसि प्रविष्टः, तस्य शब्दोऽयं न मानुषसम्भव इति। तच्छ्रुत्वा मन्थरको देशकालोचितमाह भो! लघुपतनक! यथायं मृगो दृश्यते [3]प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या [4]पृष्ठतोऽवलोकयति तन्न तृषार्त एष, नूनं लुब्धकत्रासितः। तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वा इति। उक्तं च—

भयत्रस्तो नरः श्वासं प्रभूतं कुरुतो मुहुः।
दिशोऽवलोकयंत्येव न स्वास्थ्यं व्रजति क्वचित्॥ १६०॥

तच्छ्रुत्वा चित्राङ्ग आह—भो! मन्थरक! ज्ञातं त्वया सम्यङ्मे त्रासकारणम्। अहं लुब्धकशरप्रहारादुद्धारितः[5] कृच्छ्रेणात्र समायातः। मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति, तच्छरणागतस्य मे दर्शय किञ्चिदगम्यं स्थानं लुब्धकानाम्। तदाकर्ण्य मन्थरक आह—भोश्चित्राङ्ग! श्रूयतां नीतिशास्त्रम्—

---

१. व्याधेनानुसृत इत्यर्थः। २. शरनामकतृणसमूहम्। ३. निःश्वासम्। ४. चकितदृष्ट्या। ५. विमुक्तः।

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने ।
हस्तयोश्चालनादेको द्वितीयः पादवेगजः ॥ १६१ ॥

तद्गम्यतां शीघ्रं सघनं वनम्, यावदत्रापि नागच्छन्ति ते दुरात्मानो लुब्धकाः । अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच—भो! मन्थरक! गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः । तच्चित्राङ्ग ! त्वं [1]विश्रब्धो वनाद्बहिर्भव । ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन् सरसि मध्याह्नसमये वृक्षच्छाया अधस्तात्सुभाषितगोष्ठीसुखमनुभवन्तः सुखेन कालं नयन्ति । अथवा युक्तमेतदुच्यते—

सुभाषितमयद्रव्यसंग्रहं न करोति यः ।
स तु प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ॥ १६२ ॥

तथा च—सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः ।
यस्य सम्पुटिका नास्ति कुतस्तस्य सुभाषितम् ॥ १६३ ॥

अथैकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो नायातः । अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः—अहो ! किमद्य सुहृन्न समायातः । किं सिंहादिभिः क्वापि व्यापादितः, उत लुब्धकैः, अथवा अनले प्रपतितो [2]गर्तविषमे वा [3]नवतृणलौल्यादिति । अथवा साध्विदमुच्यते—

स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात् ।
किमु दृष्टबह्वपाय-प्रतिभय-कान्तारमध्यस्थे ॥ १६४ ॥

अथ मन्थरको वायसमाह—भो ! लघुपतनक ! अहं हिरण्यकश्च तावद् द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात् । तद्गत्वा त्वमरण्यं [4]शोधय यदि कुत्रचित्तं जीवन्तं पश्यसि । तदाकर्ण्य लघुपतनको नातिदूरे यावद् गच्छति तावत्पल्वलतीरे[5] चित्राङ्गः [6]कूटपाशनियन्त्रितस्तिष्ठति । तं दृष्ट्वा [7]शोकव्याकुलितमनास्तमवोचत्—भद्र ! किमिदम् ? । चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव । अथवा युक्तमेतत्—

---

१. निःशङ्कः ।
२. निम्नोन्नतप्रदेशे । ३. सद्योजाततृणभक्षणलोभादित्यर्थः ।
४. अरण्यं गत्वाऽन्वेषयेत्यर्थः । ५. जलाशयतटे ।
६. कपटजाले बद्धः । ७. दुःखितचित्तः ।

अपि मन्दत्वमापन्नो नष्टो वाऽपीष्टदर्शनात् ।
प्रायेण प्राणिनां भूयो दुःखावेगोऽधिको भवेत् ॥ १६५ ॥

ततश्च वाष्पावसाने चित्राङ्गो लघुपतनकमाह–भो ! मित्र ! सञ्जातोऽयं तावन्मम मृत्युः । तद्युक्तं [1]सम्पन्नं यद्भवता सह मे दर्शनं सञ्जातम् । उक्तं च—प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
तद् द्वाभ्यां सुखदं पश्चाज्जीवितोऽपि मृतस्य च ॥ १६६ ॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ—

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
तत्क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥ १६७ ॥

तच्छ्रुत्वा लघुपतनक आह—भद्र ! न भेतव्यमस्मद्विधैर्विद्यमानैः । यावदहं द्रुततरं हिरण्यकं गृहीत्वा आगच्छामि । अपरं ये सत्पुरुषा भवन्ति ते [2]व्यसने न [3]व्याकुलत्वमुपयान्ति । उक्तं च—

सम्पदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ १६८ ॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकञ्च चित्राङ्गपाशमोक्षणं प्रति [4]कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किञ्चिज्जीविताशया [5]संश्लिष्ट आह-

आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ १६९ ॥

हिरण्यक आह—भद्र ! त्वं तावन्नीतिशास्त्रज्ञो [6]दक्षमतिः तत्कथमत्र कूटपाशे पतितः ? । स आह—भोः ! न कालोऽयं विवादस्य तन्नयावत् स पापात्मा लुब्धकः समभ्येति तावद् द्रुततरं कर्तयेमं मत्पाशम् । तदाकर्ण्य विहस्याह हिरण्यकः–किं मय्यपि समायाते लुब्धकाद्बिभेषि ! ततः शास्त्रं प्रति महती मे [7]विरक्तिः सम्पन्ना यद्भवद्विधा अपि नीति-

१. उचितं जातम् । २. आपदि । ३. अधीरताम् ।
४. कृतप्रतिज्ञम् । ५. युक्तः । ६. सुचतुरः ।
७. अश्रद्धा ।

शास्त्रविदः [1]एनामवस्थां प्राप्नुवन्ति तेन त्वां पृच्छामि । स आह—भद्र ! कर्मणा बुद्धिरपि हन्यते । उक्तं च—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १७० ॥
विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याऽप्यतिपण्डिताः ॥ १७१ ॥

एवं तयोः प्रवदतोः [2]सुहृद्व्यसनसंतप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह—अहो ? न शोभनमापतितम्[3] । हिरण्यक आह—किं स लुब्धकः समायाति ? स आह—आस्तां तावल्लुब्धकवार्त्ता । एष मन्थरकः समागच्छति । [4]तदनीतिरनुष्ठितानेन यतो वयमस्य कारणान्नूनं [5]व्यापादनं यास्यामो यदि स पापात्मा लुब्धकः समागमिष्यति तदहं तावत्खमुत्पतिष्यामि[6] । त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति । एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोऽस्मि । अत्रान्तरे प्राप्तोऽयं मन्थरकः । हिरण्यक आह—भद्र ! न युक्तमनुष्ठितं भवता यदत्र समायातः । तद्भूयोऽपि द्रुततरं गम्यतां यावदसौ लुब्धको न समायाति । मन्थरक आह—भद्र ! किं करोमि न शक्नोमि तत्रस्थो [7]मित्रव्यसनाग्निदाहं सोढुम् । तेनाहमत्रागतः । अथवा साध्विदमुच्यते—

दयितजनविप्रयोगा वित्तवियोगाश्च केन सह्याः स्युः ।
यदि सुमहौषधिकल्पो वयस्यजनसंगमो न स्यात् ॥ १७२ ॥
वरं प्राणपरित्यागो न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो भवन्ति न भवद्विधाः ॥ १७३ ॥

एवं तस्य प्रवदतः [8]आकर्णपूरितशरासनो लुब्धकोऽप्युपागतः तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात्खण्डितः । अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन्प्रधावितः । लघुपतनको वृक्षमारूढः । हिरण्यकश्च समीपवर्तिबिलं प्रविष्टः । अथासौ लुब्धको मृगगमनाद्विषण्णवदन

---

१. दुर्दशामित्यर्थः । २. मित्रविपदः श्रवणेन दुःखितः ।
३. जातम् । ४. अनुचितं कार्यम् । ५. विनाशम् ।
६. उड्डयिष्ये । ७. सुहृत्कष्टम् । ८. कर्णपर्यन्ताकृष्टचापः ।

  

व्यर्थश्रमस्तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवानचिन्तयच्च-यद्यपि [1]कुरङ्गो [2]धात्राऽपहृतस्तथाप्ययं कूर्म आहारार्थं संपादितः। तदद्यास्यामिषेण मे कुटुम्बस्याहारनिर्वृत्तिर्भविष्यति। एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः। अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः [3]पर्यदेवयत्—कष्टं भोः! कष्टमापतितम्—

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ १७४॥

तावदस्खलितं यावत्सुखं याति समे पथि।
स्खलिते च समुत्पन्ने विषमं च पदे पदे ॥ १७५ ॥

यन्नम्रं सरलं चापि तच्चापत्सु न सीदति।
धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजम् ॥ १७६ ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे।
विश्रम्भस्तादृशः पुंसां यादृङ्मित्रे निरन्तरे ॥ १७७ ॥

यदि तावत्कृतान्तेन[4] मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे [5]विश्रामभूतं मित्रं कस्मादपहृतम्। अपरमपि मित्रं परं मन्थरकसमानं न स्यात्। उक्तं च—

असंपत्तौ परो लाभो गुह्यस्य कथनं तथा।
आपद्विमोक्षणं चैव मित्रस्यैतत्फलत्रयम् ॥ १७८ ॥

तदस्य पश्चान्नान्यः सुहृन्मे। तत्किं [6]ममोपर्यनवरत व्यसनशरैर्वर्षति हन्त विधिः। यत आदौ तावद्वित्तनाशः ततः [7]परिवारभ्रंशः, ततो देशत्यागः, ततो मित्रवियोग इति। अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्मस्य च। उक्तं च—

कायः संनिहितापायः संपदः क्षणभङ्गुराः।
समागमाः सापगमाः सर्वेषामेव देहिनाम् ॥ १७९ ॥

---

१. मृगः। २. विधात्रा। ३. व्यलपत्।
४. दैवेन। ५. परमसहायभूतम्।
६. विपद्विपदमनुधावतीत्यर्थः। ७. परिवारनाशः।

तथा च—

क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीप्यति जाठराग्निः ।
आपत्सु वैराणि समुल्लसन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥ १८० ॥

अहो ! साधूक्तं केनापि—

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १८१ ॥

अत्रान्तरे चाक्रन्दपरौ[1] चित्राङ्गलघुपतनकौ तत्रैव समायातौ । अथ हिरण्यक आह—अहो ! किं [2]वृथा प्रलपितेन । तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते तावदस्य [3]मोक्षोपायश्चिन्त्यतामिति । उक्तं च—

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् ।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ १८२ ॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ १८३ ॥

अन्यच्च—

अतीतलाभस्य सुरक्षणार्थं भविष्यलाभस्य च सङ्गमार्थम् ।
आपत्प्रपन्नस्य च मोक्षणार्थं यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः ॥ १८४ ॥

तच्छ्रुत्वा वायस आह—भोः ! यद्येवं तत्क्रियतां मद्वचः । एष चित्राङ्गोऽस्य मार्गे गत्वा [4]कंचित्पल्वलमासाद्य तस्य तीरे [5]निश्चेतनो भूत्वा पततु । अहमप्यस्य शिरसि ससारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लेखयिष्यामि येनासौ दुष्टलुब्धकोऽमुं मृतं मत्वा मम [6]चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति । अत्रान्तरे त्वया दर्भमयानि पाशानि खण्डनीयानि येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति । चित्राङ्ग आह—भोः ! भद्रोऽयं त्वया दृष्टो [7]मन्त्रः । नूनं मन्थरकोऽयं मुक्तो मन्तव्य इति । उक्तं च—

सिद्धं वा यदि वाऽसिद्धं चित्तोत्साहो निवेदयेत् ।
प्रथमं सर्वजन्तूनां तत्प्राज्ञो वेत्ति नेतरः ॥ १८५ ॥

---

१. रुदन्तौ । २. व्यर्थं रोदनेन । ३. प्राणरक्षोपायः ।
४. जलाशयम् । ५. निश्चेष्टः ।
६. चञ्चुप्रहारेण हेतुना मृतोऽयमिति जातविश्वासेन । ७. उपायः ।

तदेवं क्रियतामिति। तथानुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं[१] चित्राङ्गं वायससनाथमपश्यत्। तं दृष्ट्वा हर्षितमना व्यचिन्तयत्—नूनं पाशबन्धनवेदनया वराकोऽयं मृगः [२]सावशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं यावत्प्रविष्टस्तावन्मृतः तद्वश्योऽयं मे कच्छपः [३]सुयन्त्रितत्वात्। तदेनमपि तावद् गृह्णामि। इत्यवधार्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत्। एतस्मिन्नन्तरे हिरण्यकेन [४]वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं[५] खण्डशः कृतम्।

मन्थरकोऽपि तृणमध्यान्निष्क्रम्य समीपवर्तिनं पल्वलं प्रविष्टः चित्राङ्गोऽप्यप्राप्तस्य[६] अपि [७]तस्य [८]तल उत्थाय वायसेन सह पलायितः। एतस्मिन्नन्तरे [९]विलक्षो [१०]विषादपरो लुब्धको निवृत्तो यावत्पश्यति तावत्कच्छपोऽपि गतः। ततश्च तत्रोपविश्येमं श्लोकमपठत्—

प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत्त्वया मे हृतः
संप्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया
यच्चान्यन्न कृतं कृतान्त! कुरु ते तच्चापि सह्यं मया॥ १८६॥

एवं बहुविधं विलप्य स्वगृहं गतः। अथ तस्मिन्व्याधे दूरतरं गते सर्वेऽपि ते काककूर्ममृगमूषिकाः परमानन्दभाजः परस्परमालिङ्ग्य पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः संप्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म। एवं ज्ञात्वा विवेकिना मित्रसंग्रहः कार्यः। न च मित्रेण सह व्याजेन वर्तितव्यमिति। उक्तं च यतः—

यो मित्राणि करोत्यत्र न कौटिल्येन वर्तते।
तैः समं न पराभूतिं संप्राप्नोति कथञ्चन॥ १८७॥

## इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रसंप्राप्तिर्नाम द्वितीयं तन्त्रं समाप्तम्।

—:ॐ:—

१. मार्गसमीपस्थजलाशयतटे स्थितम्। २. आसन्नमृत्युः। ३. सुदृढबद्धत्वात्। ४. अतिकठोरेण दंष्ट्राया आघातेनेति यावत्। ५. कुशनिर्मितबन्धनम्। ६. अनागतस्यैवेत्यर्थः। ७. लुब्धकस्य। ८. तलादित्यर्थः। ९. सलज्जः। १०. अतिदुःखितः।

# काकोलूकीयम्

अथेदमारभ्यते काकोलूकीयं नाम तृतीयं तन्त्रं यस्यायमाद्यः श्लोकः—

न विश्वसेत्पूर्वविरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य।
दग्धां गुहां पश्य उलूकपूर्णां काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथाऽनुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य समीपस्थः [२]अनेकशाखासनाथोऽतिघनतरपत्रच्छन्नः[३] न्यग्रोधपादपोऽस्ति। तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म। स तत्र [४]विहितदुर्गरचनः सपरिजनः कालं नयति स्म। तथान्योऽरिमर्दनो नामोलूकपरिवारो [५]गिरिगुहादुर्गाश्रयः प्रतिवसति स्म। स च रात्रावभ्येत्य सदैव तस्य न्यग्रोधस्य समन्तात्परिभ्रमति। अथोलूकराजः [६]पूर्वविरोधवशाद्यं कञ्चिद्वायसं समासादयति तं व्यापाद्य गच्छति। एवं नित्याभिगमनाच्छनैः शनैस्तन्न्यग्रोधपादपदुर्गं तेन समन्तान्निर्वायसं[७] कृतम्। अथवा भवत्येवम्। उक्तं च—

य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।
रोगं चालस्यसंयुक्तः स शनैस्तेन हन्यते ॥ २ ॥

तथा च—जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥ ३ ॥

अथान्येद्युः स वायसराजः सर्वान्वायससचिवानाहूय प्रोवाच—भो! [८]उत्कटस्तावदस्माकं शत्रुरुद्यमसंपन्नश्च[९] कालवशान्नित्यमेव निशागमे समेत्यास्मत्पक्षकर्तनं[१०] करोति तत्कथमस्य [११]प्रतिविधानम्? वयं तावद्रात्रौ न पश्यामः, न च तस्य [१२]दिवा दुर्गं विजानीमः, येन गत्वा प्रहरामः। तदत्र विषये किं युज्यते संधिविग्रह-याना सन-संश्रय-द्वैधी-

---

१. काकश्च उलूकश्च काकोलूकौ तयोः समाहारः काकोलूकं तदधिकृत्य कृतं तन्त्रं काकोलूकीयम्।
२. बहुशाखः। ३. अतिघनैः पर्णैः पूर्णः। ४. कृतनीड इत्यर्थः।
५. कन्दराकृतनीडः। ६. पूर्वजातवैरकारणात्। ७. सर्वथा काकशून्यम्।
८. प्रबलः। ९. सोत्साहः। १० अस्मत्पक्षीयानां प्राणिनां नाशम्।
११. प्रतिकारोपायः। १२. दिने, अव्ययमिदं दिनार्थे।

भावानामेकतमस्य क्रियमाणस्य। तद्विचार्य शीघ्रं कथयन्तु भवन्तः। अथ प्रोचुः—युक्तमभिहितं देवेन यदेष प्रश्नः कृतः। उक्तं च—

अपृष्टेनापि वक्तव्यं सचिवेनात्र किंचन।
पृष्टेन तु ऋतं पथ्यं वाच्यं च प्रियमप्रियम्॥ ४॥
यो न पृष्टो हितं ब्रूते परिणामे सुखावहम्।
सुमन्त्री प्रियवक्ता च केवलं स रिपुः स्मृतः॥ ५॥
तस्मादेकान्तमासाद्य कार्यो मन्त्रो महीपतेः।
येन तस्य वयं कुर्मो निर्णयं कारणं तथा॥ ६॥

अथ स मेघवर्णः [1]अन्वयागत-उज्जीवि-संजीवि-अनुजीवि-प्रजीवि-चिरञ्जीविनाम्नः पञ्च सचिवान्प्रत्येकं प्रष्टुमारब्धः। तत्रैतेषामादौ तावदुज्जीविनं पृष्टवान्—भद्र! एवं स्थिते किं मन्यते भवान्?। स आह—राजन्! बलवता सह विग्रहो न कार्यः। यथा स बलवान्कालप्रहर्ता[2] च। उक्तं च यतः—

बलीयसे प्रणमतां काले प्रहरतामपि।
संपदो नापगच्छन्ति प्रतीपमिव निम्नगाः॥ ७॥

तथा च—संत्याज्यो धार्मिकश्चार्यो भ्रातृसंघातवान्बली।
अनेकविजयी चैव संधेयः स रिपुर्भवेत्॥ ८॥
संधिः कार्योऽप्यनार्येण विज्ञाय प्राणसंशयम्।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितम्॥ ९॥

येनानेकयुद्धविजयी स तेन विशेषात्संधेयः[3] उक्तं च—

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रभावेण तस्याशु वशं गच्छन्त्यरातयः॥ १०॥
संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः॥ ११॥
संदिग्धो विजयो युद्धे जनानामिह युध्यताम्।
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत्॥ १२॥

---

१. वंशपरम्परायातान् उज्जीव्यादीन् मन्त्रिणः।
२. शत्रोर्बलाबलं विज्ञाय समयानुसारेण प्रहर्त्ता। ३. संधियोग्यः।

असंदधानो मानाद्यः समेनापि हतो भृशम् ।
आमकुम्भ इवान्येन करोत्युभयसंक्षयम् ॥ १३ ॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे ।
दृषत्कुम्भं यथा भित्त्वा तावत्तिष्ठति शक्तिमान् ॥ १४ ॥

अन्यच्च—भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥ १५ ॥
खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् ।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ १६ ॥
तस्मान्न स्यात्फलं यत्र दुष्टं युद्धं तु केवलम् ।
न तत्स्वयं समुत्पाद्य कर्त्तव्यं न कथञ्चन ॥ १७ ॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत् ।
वाञ्छन्नभ्रंशिनीं लक्ष्मीं न भौजङ्गीं कदाचन ॥ १८ ॥
कुर्वन् हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम् ।
भुजङ्गवृत्तिमापन्नो वधमर्हति केवलम् ॥ १९ ॥
कौर्मं सङ्कोचमास्थाय प्रहारानपि मर्षयेत् ।
काले काले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥ २० ॥
आग्रहं विग्रहं मत्वा सुसाम्ना प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसं च समुत्सृजेत् ॥ २१ ॥

तथा च—बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं नहि घनः कदाचिदुपसर्पति ॥ २२ ॥

एवमुज्जीवी [1]साममन्त्रं [2]सन्धिकारं [3]क्लृप्तवान् ।

अथ तच्छ्रुत्वा सञ्जीविनमाह—भद्र ! [4]तवाभिप्रायमपि श्रोतुमिच्छामि । स आह—देव ! न ममैतत्प्रतिभाति यच्छत्रुणा सह संधिः क्रियते । उक्तं च यतः—

शत्रुणा न हि सन्दध्यात्सुश्लिष्टेनापि सन्धिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ २३ ॥

---

१. साम्नो मन्त्रम् ।
२. सन्धिकरणोचितम् ।
३. निश्चितवान् वर्णितवानिति यावत् ।
४. तव मतमपीत्यर्थः ।

अपरं च स क्रूरोऽत्यन्तलुब्धो धर्मरहितः तत्त्वया विशेषान्न सन्धेयः। उक्तं च यतः—

सत्यधर्मविहीनेन न सन्दध्यात्कथञ्चन।
सुसन्धितोऽप्यसाधुत्वादचिराद्याति विक्रियाम्॥ २४॥

तस्मात्तेन सह योद्धव्यमिति मे [1]मतिः। उक्तं च यतः—

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेद्रिपुः॥ २५॥

अपरं तेन पराभूता वयम्। तद्यदि [2]संधानकीर्तनं करिष्यामः स भूयोऽत्यन्तं कोपं करिष्यति। उक्तं च—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति॥ २६॥
सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः॥ २७॥

यदेवैतद्वदति रिपुर्बलवान्, तदप्यकारणम्[3] उक्तं च यतः—

सोत्साहशक्तिसम्पन्नो हन्याच्छत्रुं लघुर्गुरुम्।
यथा कण्ठीरवो नागे सुसाम्राज्यं प्रपद्यते॥ २८॥
मायया शत्रवो वध्या अवध्याः स्युर्बलेन ये।
यथा स्त्रीरूपमास्थाय हतो भीमेन कीचकः॥ २९॥

तथा च—मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः।
शष्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपम्॥ ३०॥
न याति शमनं यस्य तेजस्तेजस्वितेजसा।
वृथा जातेन किं तेन मातुर्यौवनहारिणा॥ ३१॥
या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः।
कान्ताऽपि मनसः प्रीतिं न सा धत्ते मनस्विनाम्॥ ३२॥
रिपुरक्तेन संसिक्तोऽरिस्त्रीनेत्राम्बुभिस्तथा।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीवने॥ ३३॥

एवं सञ्जीवी विग्रहमन्त्रं विज्ञापयामास।

---

1. सम्मतिरिति भावः 2. सन्धिचर्चाम्। 3. अयुक्तमित्यर्थः

अथ तच्छ्रुत्वाऽजीविनमपृच्छत्—भद्र ! त्वमपि स्वाभिप्रायं निवेदय। सोऽब्रवीत्—देव ! दुष्टः स बलाधिको [1]निर्मर्यादश्च तत्तेन सह संधिविग्रहौ न युक्तौ केवलं [2]यानमहं स्यात्। उक्तं च—

बलोत्कटेन दुष्टेन मर्यादारहितेन न।
न सन्धिविग्रहौ नैव विना यानं प्रशस्यते ॥ ३४ ॥

द्विधाकारं भवेद्यानं भयत्रस्तप्ररक्षणम्।
एकमन्यज्जिगीषोश्च यात्रालक्षणमुच्यते ॥ ३५ ॥

कार्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते।
यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥ ३६ ॥

अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्तिताः।
व्यसने वर्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३७ ॥

स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः।
परदेशं ततो गच्छेत्प्रणिधिव्याप्तमग्रतः ॥ ३८ ॥

अज्ञातविविधासारतोयसस्यो व्रजेत्तु यः।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति ॥ ३९ ॥

तत्ते युक्तं कर्तुमपसरणम्[3]। अन्यच्च—

न विग्रहं न सन्धानं बलिना तेन पापिना।
कार्यलाभमपेक्ष्यापसरणं क्रियते बुधैः ॥ ४० ॥

उक्तं च यतः—

यदपसरति मेषः कारणं तत्प्रहर्तुं
मृगपतिरतिकोपात्सङ्कुचत्युत्पतिष्णुः।
हृदय[4]विहितवैरा गूढमन्त्रोपचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ४१ ॥

अन्यच्च—बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः।
युधिष्ठिर इवाप्नोति पुनर्जीवन्स मेदिनीम् ॥ ४२ ॥

युद्ध्यतेऽहंकृतिं कृत्वा दुर्बलो यो बलीयसा।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयम् ॥ ४३ ॥

---

१. अत्याचारी चेत्यर्थः। २. याननामकोपायप्रयोग उचित इत्यर्थः।
३. यानमिति यावत्।

तद् [1]बलवताभियुक्तस्य [2]अपसरणसमयोऽयं न सन्धेर्विग्रहस्य च। एवमनुजीविमन्त्रोऽपसरणस्य ।

अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह—भद्र ! त्वमप्यात्मनोऽभिप्रायं वद। सोऽब्रवीत्—देव ! मम सन्धिविग्रहयानानि त्रीण्यपि न प्रतिभान्ति। विशेषतश्चासनं[3] प्रतिभाति। उक्तं च यतः—

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनाऽपि परिभूयते ॥ ४४ ॥

अन्यच्च—अभियुक्तो बलवता दुर्गे तिष्ठेत्प्रयत्नवान् ।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये ॥ ४५ ॥

यो रिपोरागमं श्रुत्वा भयसन्त्रस्तमानसः ।
स्वं स्थानं सन्त्यजेत्तत्र न स भूयो वसेन्नरः ॥ ४६ ॥

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
स्थानहीनस्तथा राजा गम्यः स्यात्सर्वजन्तुषु ॥ ४७ ॥

निजस्थानस्थितोऽप्येकः शतं योद्धुं सहेन्नरः।
शक्तानामपि शत्रूणां तस्मात्स्थानं न सन्त्यजेत् ॥ ४८ ॥

तस्माद् दुर्गं दृढं कृत्वा सुभटासारसंयुतम् ।
प्राकारपरिखायुक्तं शस्त्रादिभिरलंकृतम् ॥ ४९ ॥

तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन्सम्प्राप्स्यसि क्ष्मान्तं मृतो वा स्वर्गमेष्यसि ॥ ५० ॥

अन्यच्च—बलिनापि न बध्यन्ते लघवोऽप्येकसंश्रयाः ।
विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥ ५१ ॥

महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य इव वातेन शक्यो धर्षयितुं यतः ॥ ५२ ॥

अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः ।
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसंश्रयात् ॥ ५३ ॥

एवं मनुष्यमेकं च शौर्येणापि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम् ॥ ५४ ॥

---

1. प्रबलेन शत्रुणा आक्रान्तस्य ।
2. याननामकोपायप्रयोगकालः ।
3. तदाख्य उपायः ।

एवं प्रजीविमन्त्रः । इदमासनसंज्ञकम् ।

एतत्समाकर्ण्य चिरञ्जीविनं प्राह—भद्र ! त्वमपि स्वाभिप्रायं वद । सोऽब्रवीत्—देव ! [1]षाड्गुण्यमध्ये मम [2]संश्रयः सम्यक् प्रतिभाति तत्तस्यानुष्ठान[3] कार्यम् । उक्तं च—

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ ५५ ॥

सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥ ५६ ॥

तदत्रैव स्थितेन त्वया कश्चित्समर्थः समाश्रयणीयः, यो विपत्प्रतीकारं करोति । यदि पुनस्त्वं स्वस्थानं त्यक्त्वान्यत्र यास्यसि तत्कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति । उक्तं च यतः—

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ५७ ॥

अथवा नैतदेकान्तम्[4] यद् बलिनमेकं समाश्रयेत् । लघूनामपि संश्रयो रक्षायै एव भवति । उक्तं च यतः—

संघातवान्यथा वेणुर्निविडो वेणुभिर्वृतः ।
न शक्यः स समुच्छेत्तुं दुर्बलोऽपि तथा नृपः ॥ ५८ ॥

यदि पुनरुत्तमसंश्रयो भवति तत्किमुच्यते । उक्तं च—

महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ ५९ ॥

तदेवं संश्रयं विना न कश्चित्प्रतीकारो भवति । तस्मात्संश्रयः कार्य इति मेऽभिप्रायः । एवं चिरञ्जीविमन्त्रः ।

अथैवमभिहिते स मेघवर्णो राजा चिरन्तनं [5]पितृसचिवं दीर्घायुषं सकलनीतिशास्त्रपारङ्गतं स्थिरजीविनामानं प्रणम्य प्रोवाच—तात ! यदेते मया पृष्टाः सचिवास्तावदत्र स्थितस्यापि तव, [6]तत्परीक्षार्थम् ।

---

१. सन्धिविग्रहयानासनद्वैधीभावाश्रयाणां मध्ये । २. तदाख्य उपायः । ३. संश्रयाख्यस्योपायस्य प्रयोगः । ४. सिद्धान्तभूतं युक्तियुक्तमिति यावत् । ५. पितुर्मन्त्रिणम् । ६. कर्त्तव्याकर्तव्यनिर्णयार्थमित्यर्थः ।

येन त्वं सकलं श्रुत्वा यदुचितं तन्मे समादिशसि। तद्यद्युक्तं[1] भवति तत्समादेश्यम्[2]। स आह—वत्स! सर्वैरप्येतैः [3]नीतिशास्त्राश्रयमुक्तं सचिवैः। तदुपयुज्यते [4]स्वकालोचितं सर्वमेव। परमेष द्वैधीभावस्य कालः। उक्तं च—

अविश्वासं सदा तिष्ठेत्सन्धिना विग्रहेण च।
द्वैधीभावं समाश्रित्य नैव शत्रौ बलीयसि॥ ६०॥

तच्छत्रुं विश्वास्य [5]अविश्वस्तैर्लोभं दर्शयद्भिः सुखेनोच्छिद्यते[6] रिपुः। उक्तं च—

उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा।
गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते॥ ६१॥

उक्तं च—कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा।
एकभावेन कर्तव्यं शेषं द्वैधं समाश्रितम्॥ ६२॥

तद् द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति। लोभाश्रयाच्च शत्रुमुच्चाटयिष्यसि। अपरं यदि किञ्चिच्छिद्रं तस्य पश्यसि तद्गत्वा व्यापादयिष्यसि[7]। मेघवर्ण आह—तात! मया सोऽविदितसंश्रयः[8]। तत्कथं तस्य छिद्रं ज्ञास्यामि। स्थिरजीव्याह—वत्स! न केवलं स्थानम्, छिद्राण्यपि तस्य प्रकटीकरिष्यामि [9]प्रणिधिभिः। उक्तं च—

गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥ ६३॥

उक्तञ्चात्र विषये—

यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात्॥ ६४॥

मेघवर्ण आह—तात! कानि [10]तीर्थान्युच्यन्ते कतिसंख्यानि च, कीदृशा गुप्तचराः, तत्सर्वं निवेद्यतामिति। स आह—अत्र विषये भगवता

---

१. तस्माद् यन्नीतिसम्मतं भवति। २. कर्तुमाज्ञापयितव्यम्।
३. नीतिशास्त्रानुकूलम्। ४. स्वप्रयोगकाले प्रयुक्तमित्यर्थः।
५. स्वयंशत्रुमविश्वसद्भिः ६. लोभपारवश्यादिति भावः।
७. हनिष्यसि। ८. अविदितः संश्रयो वासस्थानं यस्य सः।
९. गुप्तचरैरित्यर्थः। १०. मन्त्राद्यष्टादश स्थानानि।

नारदेन युधिष्ठिरः प्रोक्तः । यच्छत्रुपक्षेऽष्टादश तीर्थानि, स्वपक्षे पञ्चदश। त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञेयानि। तैर्ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति। उक्तञ्च नारदेन युधिष्ठिरं प्रति—

कच्चिदष्टादशान्येष स्वपक्षे दश पञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ६५ ॥

तीर्थशब्देनायुक्तकर्माभिधीयते[1] तद्यदि तेषां कुत्सितं भवति तत्स्वामिनोऽभिघाताय भवति। प्रधानं भवति, तद् वृद्धये स्यादिति। तद्यथा मन्त्री, पुरोहितः, सेनापतिः, युवराजः, [2]दौवारिकः, [3]अन्तर्वशिकः [4]प्रशासकः, [5]समाहर्तृ-सन्निधातृ-प्रदेष्टृ-ज्ञापकाः, साधनाध्यक्षः गजाध्यक्षः, कोषाध्यक्षः [6]दुर्गपाल-करपाल-सीमापाल-प्रोत्कटभृत्याः। एषां [7]भेदेन द्राग्रिपुः साध्यते[8]। स्वपक्षे च-[9]देवी, जननी, [10]कञ्चुकी, [11]मालिकः, [12]शय्यापालकः, [13]स्पर्शाध्यक्षः, [14]सांवत्सरिकः, भिषक्, जलवाहकः, ताम्बूलवाहकः, आचार्यः, [15]अङ्गरक्षकः, स्थानचिन्तकः, छत्रधरः [16]विलासिनी। एषां वैरद्वारेण स्वपक्षे विघातः।

वैद्यवात्सरिकाचार्याः स्वपक्षेऽधिकृताश्चराः।
यथाहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु ॥ ६६ ॥

---

१. अयुक्तं शत्रुजयार्थं गूढं क्रियमाणं कर्म सचिवादीत्यर्थः।
२. द्वारपालः। ३. रक्षार्थमन्तःपुरे नियुक्तः कोऽपि पुरुषः।
४. सकलशासकानामध्यक्षः
५. समाहर्ता = करसंग्रहकारी, सन्निधाता = संगृहीतकराणां यथायथं स्थापयिता, प्रदेष्टा = प्रथप्रदर्शकः, ज्ञापकः = संवाददाता ते च ते तथोक्ताः।
६. दुर्गपालः = दुर्गरक्षकः, करपालः = राजस्वसंरक्षकः, सीमापालः = सीमावेक्षकः, प्रोत्कटः = कोऽपि प्रभावशाली कर्मचारी ते च ते भृत्याः।
७. परस्परवैमनस्योत्पादनेनेत्यर्थः। ८. वशमानीयते।
९. पट्टमहिषी। १०. अन्तःपुरचारी कोऽपि वृद्धो विप्रः।
११. मालाकारः ( माली ) १२. शयनागाररक्षकः
१३. राजकीयगन्धद्रव्याणां प्रबन्धकः। १४ दैवज्ञः।
१५. शरीररक्षकः। १६ वेश्या।

तथा च—कृत्याकृत्यविदस्तीर्थेष्वन्तःप्रणिधयः पदम् ।
विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ ६७ ॥

एवं मन्त्रिवाक्यमाकर्ण्यात्रान्तरे मेघवर्ण आह—तात ! अथ किंनिमित्तमेवंविधं प्राणान्तिकं सदैव वायसोलूकानां वैरम् । स आह—वत्स ! कदाचिद्धंस-शुक-वक-कोकिल-चातक-उलूक-कपोत-पारावत-विष्किर-प्रभृतयः सर्वेऽपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुमारब्धाः—अहो ! अस्माकं तावद्वैनतेयो[1] राजा । स च वासुदेवभक्तः । न कामपि चिन्तामस्माकं करोति । तत्किं तेन वृथा स्वामिना, यो लुब्धकपाशैर्नित्यं निबध्यमानानां न रक्षां विधत्ते । उक्तं च—

यो न रक्षति वित्रस्तान्पीड्यमानान्परैः सदा ।
जन्तून् पार्थिवरूपेण स कृतान्तो न संशयः ॥ ६८ ॥
यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ६९ ॥
षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ७० ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामञ्च गोपालं वनकामं च नापितम् ॥ ७१ ॥

तत्सञ्चिन्त्यान्यः कश्चिद्राजा विहङ्गमानां क्रियतामिति ।

अथ तैः [2]भद्राकारमुलूकमवलोक्य सर्वैरभिहितम्—'यदेष उलूको राजास्माकं भविष्यति तदानीयन्तां नृपाभिषेकसम्बन्धिनः [3]सम्भाराः' इति । अथ [4]साधिते विविधतीर्थोदके [5]प्रगुणीकृतेऽष्टोत्तरशतमूलिकासंघाते, प्रदत्ते सिंहासने, वर्तिते सप्तद्वीपसमुद्रभूधरविचित्रे धरित्रीमण्डले प्रसारिते व्याघ्रचर्मणि, आपूरितेषु हेमकुम्भेषु, दीपेषु वाद्येषु च, सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु, पठत्सु बन्दिमुख्येषु, वेदोच्चारणपरेषु समुदितमुखेषु ब्राह्मणेषु, गीतपरे युवतीजने, आनीतायामग्रमहिष्यां[6] कृकालिकायाम्, उलूकोऽभिषेकार्थं याव-

---

१. गरुडः । २. शोभनाकृतिम् । ३. वस्तूनि ।
४. आनीते । ५. सम्यक्प्रकारेण संख्याते । ६. प्रधानमहिष्याम् ।

त्सिंहासन उपविशति, तावत्कुतोऽपि वायसः समायातः। सोऽचिन्तयत्-अहो! किमेष सकलपक्षिसमागमो महोत्सवश्च?। अथ ते दृष्ट्वा मिथः प्रोचुः—पक्षिणां मध्ये वायसश्चतुरः श्रूयते। उक्तञ्च—

नराणां नापितो धूर्तः पक्षिणां चैव वायसः।
द्रंष्ट्रिणां च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम्॥ ७२॥

तदस्यापि वचनं ग्राह्यम्। उक्तञ्च—

बहुधा बहुभिः सार्धं चिन्तिताः सुनिरूपिताः।
कथञ्चिन्न विलीयन्ते विद्वद्भिश्चिन्तिता नयाः॥ ७३॥

अथ वायसः समेत्य तानाह—अहो! किं महाजनसमागमोऽयं परममहोत्सवश्च?। ते प्रोचुः—भोः! नास्ति कश्चिद् विहङ्गमानां राजा तदस्योलूकस्य विहङ्गराज्याभिषेको [1]निरूपितस्तिष्ठति समस्तपक्षिभिः। तत्त्वमपि स्वमतं देहि। [2]प्रस्तावे समागतोऽसि। अथासौ। काको विहस्याह—अहो! न युक्तमेतत्, यन्मयूर-हंस-कोकिल-चक्रवाक-शुक-कारण्डव-हारीत-सारसादिषु पक्षिप्रधानेषु विद्यमानेषु [3]दिवान्धस्यास्य [4]करालवक्त्रस्याभिषेकः क्रियते। तन्नैतन्मम मतम्। यतः—

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम्।
अक्रुद्धस्येदृशं वक्त्रं भवेत्क्रुद्धस्य कीदृशम्॥ ७४॥

तथा च—स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनम्।
उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति॥ ७५॥

अपरं वैनतेये स्वामिनि स्थिते किमेष दिवान्धः क्रियते राजा। तद्यद्यपि गुणवान्भवति तथाप्येकस्मिन्स्वामिनि स्थिते नान्यो भूपः प्रशस्यते।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः।
युगान्त इव भास्वन्तो बहवोऽत्र विपत्तये॥ ७६॥
गुरूणां नाममात्रेऽपि गृहीते स्वामिसम्भवे।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते॥ ७७॥

तथा च—व्यपदेशेन महतां सिद्धिः सञ्जायते परा।

---

१. कर्तुं निश्चित इति भावः।
२. राज्याभिषेकस्यारम्भे। ३. उलूकस्य। ४. भीषणाकृतेः।

शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥ ७८ ॥

त ऊचुः—कथमेतत् स आह—

## कथा (१)

कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचिन्महत्यनावृष्टिः[1] संजाता प्रभूतवर्षाणि यावत्। तया तडागह्रदपल्वलसरांसि शोषमुपगतानि। अथ तैः समस्तगजैः स गजराजः प्रोक्तः—देव ! पिपासाकुला गजकलभा मृतप्रायाः, अपरे मृताश्च तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति। ततश्चिरं ध्यात्वा तेनाभिहितम्–'अस्ति महाह्रदो विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गाजलेन सदैव पूर्णः। तत्तत्र गम्यताम्' इति। तथानुष्ठिते [2]पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्रदः। तत्र स्वेच्छया जलमवगाह्यास्तमनवेलायां[3] निष्क्रान्ताः। तस्य च ह्रदस्य समन्ताच्छशकबिला असंख्याः सुकोमलभूमौ तिष्ठन्ति। तेऽपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भिः[4] परिभग्नाः। बहवः शशका भग्नपादशिरोग्रीवा विहिताः। केचिन्मृताः, केचिज्जीवशेषा जाताः। अथ गते तस्मिन्गजयूथे शशकाः सोद्वेगा [5]गजपादक्षुण्णसमावासाः केचिद्भग्नपादाः, अन्ये जर्जरितकलेवरा रुधिरप्लुताः, अन्ये हतशिशवो [6]बाष्पपिहितलोचनाः समेत्य मिथो मन्त्रं चक्रुः—अहो विनष्टा वयम्। नित्यमेवैतद्गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति तत्सर्वेषां नाशो भविष्यति। उक्तञ्च—

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
सहन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ ७९ ॥

तच्चिन्त्यतां कश्चिदुपायः। तत्रैकः प्रोवाच-गम्यतां देशत्यागेन। किमन्यत्। उक्तञ्च—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥ ८० ॥

---

१. बहुकालिकीति यावत्। २. पञ्चरात्रिपर्य्यन्तमित्यर्थः।
३. सायङ्काले। ४. विनाशिताः।
५. हस्तिनां चरणप्रक्षेपैर्नष्टबिलाः। ६. रुदन्त इत्यर्थः।

क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥ ८१ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ८२ ॥

ततश्चान्ये प्रोचुः—भोः! पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम्, तत्क्रियतां तेषां कृते काचिद्विभीषिका[1]। यत्कथमपि दैवान्न समायान्ति। उक्तञ्च—

निर्विषेणापि सर्पेण कर्तव्या महती फटा।
विषं भवतु मा वास्तु फटाटोपो भयङ्करः ॥ ८३ ॥

अथान्ये प्रोचुः—यद्येवं ततस्तेषां महद्विभीषिकास्थानमस्ति, येन नागमिष्यन्ति। सा च [2]चतुरदूतायत्ता विभीषिका। तत्र विजयदत्तो नाम राजास्मत्स्वामी शशकश्चन्द्रमण्डले निवसति। तत्प्रेष्यतां कश्चिन्मिथ्यादूतो यूथाधिपसकाशं यच्चन्द्रस्त्वामत्र ह्रद आगच्छन्तं निषेधयति। यतः [3]अस्मत्परिग्रहोऽस्य समन्ताद्वसति। एवमभिहिते श्रद्धेयवचनात्कदापि निवर्तते। अथान्ये प्रोचुः—यद्येवं तदस्ति लम्बकर्णो नाम शशकः। स च [4]वचनरचनाचतुरो दूतकर्मज्ञः। स तत्र प्रेष्यतामिति।

उक्तञ्च—साकारो निस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ८४ ॥

अन्यच्च—यो मूर्खं लौल्यसंपन्नं राजद्वारिकमाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति ॥ ८५ ॥

तदन्विष्यतां[5] यथास्माद् व्यसनादात्मनां[6] सुनिर्मुक्तिः[7]। अथान्ये प्रोचुः—अहो! युक्तमेतत्। नान्यः कश्चिदुपायोऽस्माकं जीवितस्य। तत्तथैव क्रियताम्। अथ लम्बकर्णो गजयूथाधिपसमीपे [8]निरू-

---

१. भयप्रदर्शनं विपत्सम्भावनेत्यर्थः।
२. चतुरस्य निपुणस्य दूतस्य आयत्ता अधीना तदेकसाध्येतियावत्।
३. अस्मदीयानुचरवर्ग इत्यर्थः।
४. वाक्चतुरः।
५. ज्ञायतां क्रियतामिति भावः।
६. स्वकीयशशकानाम्।
७. अनायासेन मोचनस्योपाय इति यावत्।
८. गमनाय सर्वैर्निश्चितः।

पितो गतश्च । तथानुष्ठिते लम्बकर्णोऽपि गजमार्गमासाद्यागम्यं स्थलमारुह्य तं गजमुवाच—भो ! भो ! दुष्ट ! गज ! किमेवं लीलया निःशङ्कतयात्र चन्द्रह्रद आगच्छसि । तन्नागन्तव्यं निवर्त्यतामिति । तदाकर्ण्य विस्मित-मना गज आह—भोः ! कस्त्वम् ? स आह—अहं लम्बकर्णो नाम शशकश्चन्द्रमण्डले वसामि । साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतः । जानात्येव भवान्, यथार्थवादिनो दूतस्य न दोषः [1]करणीयः । दूतमुखा हि राजानः सर्व एव । उक्तञ्च—

उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि ।
परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा ॥ ८६ ॥

तच्छ्रुत्वा स आह—भो ! शशक ! तत्कथय भगवतश्चन्द्रमसः सन्देशम्, येन सत्वरं क्रियते । स आह—भवतातीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः तत्किं न वेत्ति भवान्, यन्मम परिग्रहोऽयम् । तद्यदि जीवितेन ते प्रयोजनम्' तदा केनापि प्रयोजनेनात्र ह्रदे नागन्तव्यमिति सन्देशः । गज आह—अथ क्व वर्तते भगवान्स्वामी चन्द्रः ? स आह—अत्र ह्रदे साम्प्रतं शशकानां भवद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति । अहं पुनस्तवान्तिकं प्रेषितः । गज आह—यद्येवं तद्दर्शय मे तं स्वामिनं येन प्रणम्यान्यत्र गच्छामि । शशक आह—भोः ! आगच्छ मया सहैकाकी येन दर्शयामि । तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रबिम्बमदर्शयत् । आह-च भोः ! एष नः स्वामी जलमध्ये [2]समाधिस्थस्तिष्ठति । तन्निभृतं प्रणम्य सत्वरं व्रजेति । नो चेत्समाधिभङ्गाद्भूतोऽपि प्रभूतं कोपं करिष्यति । अथ गजोऽपि त्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः । शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म । अतोऽहं ब्रवीमि—'व्यपदेशेन महताम्' इति ॥ अपि च क्षुद्रमलसं कापुरुषं व्यसनिनमकृतज्ञं पृष्ठप्रलपनशीलं स्वामित्वेन नाभियोजयेज्जीवितकामः । उक्तञ्च—

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।

[1]. मन्तव्य इत्यर्थः । [2]. ध्यानावस्थितः ।

उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ ८७ ॥

ते प्रोचुः—कथमेतत् । स आह—

## कथा (२)

कस्मिंश्चिद् वृक्षे पुराहमवसम् । तत्राधस्तात्कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायाम्[1] [2]आगतयोर्द्वयोरनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिपुराणचरितकीर्तनेन च [3]पर्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित्कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालिप्रायं देशं गतः । ततो यावन्निशासमयेऽपि नायातस्तावदहं [4]सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान्—अहो ! किमद्य कपिञ्जलो नायातः । किं केनापि पाशेन बद्धः । आहोस्वित्केनापि व्यापादितः सर्वथा यदि कुशली भवति तन्मां विना न तिष्ठति । एवं मे चिन्तयतो बहून्यहानि व्यतिक्रान्तानि । ततश्च तत्र कोटरे कदाचिच्छीघ्रगो नाम शशकोऽस्तमनवेलायामागत्य प्रविष्टः । मयापि कपिञ्जलनिराशत्वेन न निवारितः । अथान्यस्मिन्नहनि कपिञ्जलः शालिभक्षणादतीव पीवरतनुः स्वमाश्रयं स्मृत्वा भूयोऽपि तत्रैव समायातः । अथवा साध्विदमुच्यते—

न तादृग्जायते सौख्यमपि स्वर्गे शरीरिणाम् ।
दारिद्र्येऽपि हि यादृक्स्यात्स्वदेशे स्वपुरे गृहे ॥ ८८ ॥

अथासौ कोटरान्तर्गतं शशकं दृष्ट्वा [5]सापेक्षमाह—भोः ! शशक ! न त्वया सुन्दरं कृतं यन्ममावासस्थाने[6] प्रविष्टोऽसि तच्छीघ्रं निष्क्रम्यताम् । शशक आह—न तवेदं गृहम् । किंतु ममैवं, तत्किं मिथ्या परुषाणि जल्पसि । उक्तञ्च—

वापीकूपतडागानां देवालयकुजन्मनाम् ।
उत्सर्गात्परतः स्वाम्यमपि कर्तुं न शक्यते ॥ ८९ ॥

---

१. सायङ्काले । २. आवयोरित्यर्थः ।
३. भ्रमणकाले दृष्टानां विस्मयकरीणां घटनानां वर्णनेनेत्यर्थः ।
४. व्याकुलः ।
५. अनादरपूर्वकम् । ६. आवासस्थाने बिल इत्यर्थः ।

तथा च—प्रत्यक्षं यस्य यद्भुक्तं क्षेत्राद्यं दश वत्सरान् ।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा ॥ ९० ॥
मानुषाणामयं न्यायो मुनिभिः परिकीर्तितः ।
तिरश्चां च विहङ्गानां यावदेव समाश्रयः ॥ ९१ ॥

तन्ममैतद् गृहं, न तव' इति । कपिञ्जल आह—भोः! यदि स्मृतिं प्रमाणीकरोषि तदागच्छ मया सह, येन [1]स्मृतिपाठकं पृष्ट्वा स यस्य ददाति स गृह्णातु । तथानुष्ठिते मयापि चिन्तितम्—किमत्र भविष्यति। मया द्रष्टव्योऽयं [2]न्यायः । ततः कौतुकादहमपि [3]तावनुप्रस्थितः। अत्रान्तरे तीक्ष्णदंष्ट्रो नामारण्यमार्जारस्तयोर्विवादं श्रुत्वा मार्गासन्नंनदी-तटमासाद्य [4]कृतकुशोपग्रहो निमीलितनयन ऊर्ध्वबाहुरर्धपादस्पृष्ट-भूमिः श्रीसूर्याभिमुख इमां [5]धर्मोपदेशनामकरोत्—अहो! असारोऽयं संसारः । क्षणभङ्गुराः प्राणाः । स्वप्नसदृशः प्रियसमागमः । इन्द्रजालव-त्कुटुम्बपरिग्रहोऽयम् । तद्धर्ममुक्त्वा नान्या [6]गतिरस्ति । उक्तञ्च—

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ ९२ ॥
यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ९३ ॥
नाच्छादयति कौपीनं न दंशमशकापहम् ।
शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम् ॥ ९४ ॥

अन्यच्च—पुलाका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्येषु येषां धर्मो न कारणम् ॥ ९५ ॥
श्रेयः पुष्पं फलं वृक्षाद्दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस्तैलं च पिण्याकाच्छ्रेयान्धर्मस्तु मानुषात् ॥ ९६ ॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम् ।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा ॥ ९७ ॥
स्थैर्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः ।

---

१. धर्मशास्त्रिणम् । २. विचारः ।
३. तयोःपश्चादितियावत् । ४. सद्भावबोधनाय कुशहस्त इत्यर्थः ।
५. धर्मशास्त्रोपदेशम् । ६. आश्रयः सहायक इति भावः ।

बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ ९८ ॥
संक्षेपात्कथ्यते धर्मो जनाः ! किं विस्तरेण वः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ ९९ ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १०० ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह—भोः भोः ! कपिञ्जल ! एष नदीतीरे तपस्वी धर्मवादी तिष्ठति । तदेनं पृच्छावः । कपिञ्जल आह—ननु स्वभावतोऽस्माकं शत्रुभूतोऽयमस्ति तद् दूरे स्थितौ पृच्छावः । कदाचिदस्य व्रतवैकल्यं संपद्येत । ततो दूरस्थितावूचतुः—[1]भोः ! भोस्तपस्विन् ! धर्मोपदेशक ! आवयोर्विवादो वर्तते । तद्धर्मशास्त्रद्वारेणास्माकं निर्णयं कुरु यो [2]हीनवादी स ते भक्ष्य इति । स आह—भद्रौ ! मा मैवं वदतम् ! निवृत्तोऽहं [3]नरकपातकमार्गात् । अहिंसैव धर्ममार्गः । उक्तञ्च—

अहिंसापूर्वको धर्मो यस्मात्सद्भिरुदाहृतः ।
यूकमत्कुणदंशादींस्तस्मात्तानपि रक्षयेत् ॥ १०१ ॥
हिंसकान्यपि भूतानि यो हिंसति स निर्घृणः ।
स याति नरकं घोरं किं पुनर्यः शुभानि च ॥ १०२ ॥

एतेऽपि ये याज्ञिका यज्ञकर्मणि पशून्व्यापादयन्ति, ते मूर्खाः [4]परमार्थं श्रुतेर्न जानन्ति । तत्र किलैतदुक्तमजैर्यष्टव्यम् । अजा व्रीहयस्तावत्सप्तवार्षिकाः कथ्यन्ते न पुनः पशुविशेषाः । उक्तं च—

वृक्षांश्छित्त्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गो नरकं केन गम्यते ॥ १०३ ॥

तन्नाहं भक्षयिष्यामि । परं जयपराजयनिर्णयं करिष्यामि । किन्त्वहं वृद्धो दूराद्युवयोर्भाषान्तरं[5] सम्यङ् न शृणोमि । एवं ज्ञात्वा मम समीपवर्तिनौ भूत्वा ममाग्रे [6]न्यायं वदतम् । येन विज्ञाय

---

१. महात्मन्नित्यर्थः ।
२. अनृतवादी पराजित इति यावत् ।
३. नरकप्राप्तिकरात्पथः ।
४. तात्पर्यम् ।
५. वाक्यभेदमभिप्रायमिति यावत् ।
६. यथार्थतामिति भावः ।

[1]विवादपरमार्थं, वचो वदतो मे [2]परलोकबाधो न भवति। उक्तं च यतः—

मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात्।
यो न्ययमन्यथा ब्रूते स याति नरकं नरः॥ १०४॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतं कन्यानृते हन्ति सहस्रं पुरुषानृते॥ १०५॥
उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः।
तस्माद् दूरेण स त्याज्यो न्यायं वा कीर्तयेदृतम्॥ १०६॥

तस्माद्विश्रब्धौ[3] मम कर्णोपान्तिके स्फुटं निवेदयतम्। किं बहुना तेन [4]क्षुद्रेण तथा तौ तूर्णं विश्वासितौ यथा तस्योत्सङ्गवर्तिनौ सञ्जातौ। ततश्च तेनापि समकालमेवैकः पादान्तेनाक्रान्तः, अन्यो दंष्ट्राक्रकचेन[5] च। ततो गतप्राणौ भक्षिताविति। अतोऽहं ब्रवीमि—'क्षुद्रमर्थपतिं प्राप्य, इति। भवन्तोऽप्येनं दिवान्धं क्षुद्रमर्थपतिमासाद्य रात्र्यन्धाः सन्तः शशकपिञ्जलमार्गेण यास्यन्ति। एवं ज्ञात्वा यदुचितं तद्विधेयमतः परम्। अथ तस्य तद्वचनमाकर्ण्य 'साध्वनेनाभिहितम्' इत्युक्त्वा 'भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामहे' इति ब्रुवाणाः सर्वे पक्षिणो यथाभिमतं जग्मुः। केवलमवशिष्टो भद्रासनोपविष्टोऽभिषेकाभिमुखो दिवान्धः कृकालिकया सहास्ते। आह च—'कः कोऽत्र भोः! किमद्यापि न क्रियते ममाभिषेकः'? इति श्रुत्वा कृकालिकयाभिहितम्—भद्र! तवाभिषेके कृतोऽयं विघ्नो वायसेन, गताश्च सर्वेऽपि विहगा यथेप्सितासु दिक्षु। केवलमेकोऽयं वायसोऽवशिष्टः केनापि हेतुना तिष्ठति। तत्त्वरितमुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयामि। तच्छ्रुत्वा सविषादमुलूको वायसमाह—भो! भो! दुष्टात्मन्! किं मया तेऽपकृतम्, यद्राज्याभिषेको मे विघ्नितः। तदद्यप्रभृति [6]सान्वयमावयोर्वैरं सञ्जातम्। उक्तञ्च—

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना।

---

१. विवादस्य यथार्थताबोधकमित्यर्थः। २. स्वर्गप्रतिबन्धो दोष इति यावत्। ३. निर्भयौ। ४. दुष्टेन। ५. दंष्ट्राघातेनेति भावः। ६. कुलक्रमागतं स्वाभाविकमिति यावत्।

वचो दुरुक्तं वीभत्सं न प्ररोहति वाक्क्षतम् ॥ १०७ ॥

इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः । अथ भयव्याकुलो वायसो व्यचिन्तयत्—अहो ! अकारणं वैरमासादितम्[1] । मया किमिदं व्याहृतम्[2] । उक्तञ्च—

अदेशकालज्ञमनायतिक्षमं यदप्रियं लाघवकारि चात्मनः ।
योऽत्राब्रवीत्कारणवर्जितं वचो न तद्वचः स्याद्विषमेव तद्वचः ॥१०८॥

बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम् ।
भिषङ्ममास्तीति विचिन्त्य भक्षये-
दकारणात्को हि विचक्षणो विषम् ॥ १०९ ॥

परपरिवादः परिषदि न कथञ्चित्पण्डितेन वक्तव्यः ।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति ॥ ११० ॥

सुहृद्भिराप्तैरसकृद्विचारितं
स्वयञ्च बुद्ध्या प्रविचारिताश्रयम् ।
करोति कार्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्या यशसां च भाजनम् ॥ १११ ॥

एवं विचिन्त्य काकोऽपि प्रयातः । तदा प्रभृत्यस्माभिः सह [3]कौशिकानामन्वयगतं वैरमस्ति । मेघवर्ण आह—तात ! एवं गते अस्माभिः किं कृतमस्ति । स आह—वत्स ! एवं गतेऽपि [4]षाड्गुण्यादपरः [5]स्थूलोऽभिप्रायोऽस्ति । तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय यास्यामि । रिपून्वञ्चयित्वा वधिष्यामि । उक्तञ्च यतः—

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छागलादिव ॥ ११२ ॥

मेघवर्ण आह—कथमेतत् । सोऽब्रवीत्—

## कथा (३)

कस्मिंश्चिदधिष्ठाने मित्रशर्मा नाम ब्राह्मणः [6]कृताग्निहोत्रपरिग्रहः

1. उत्पादितम् । 2. उक्तम् ।
3. उलूकानाम् । 4. संधिविग्रहप्रभृत्युपायषट्कात् ।
5. श्रेष्ठ उपाय इति भावः । 6. अग्निहोत्री ।

प्रतिवसति स्म। तेन कदाचिन्माघमासे [1]सौम्यानिले प्रवाति, मेघाच्छादिते गगने मन्दं मन्दं प्रवर्षति [2]पर्जन्ये, पशुप्रार्थनाय किञ्चिद् ग्रामान्तरं गत्वा कश्चिद्यजमानो याचितः—भो! यजमान! आगामिन्याममावास्यायामहं यक्ष्यामि यज्ञं तद्देहि मे पशुमेकम्। अथ तेन तस्य शास्त्रोक्तः [3]पीवरतनुः पशुः प्रदत्तः। सोऽपि तं [4]समर्थमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे। अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः सम्मुखा बभूवुः। तैश्च तादृशं पीवरतनुं स्कन्ध आरूढमवलोक्य मिथोऽभिहितम्—अहो! अस्य पशोर्भक्षणादद्यतनीयः[5] हिमपातः[6] व्यर्थतां नीयते। तदेनं वञ्चयित्वा पशुमादाय शीतत्राणं कुर्मः। अथ तेषामेकतमो वेषपरिवर्तनं विधाय सम्मुखो भूत्वापमार्गेण[7] [8]तमाहिताग्निमूचे—भो! भो! [9]बालाग्निहोत्रिन्! किमेवं जनविरुद्धं हास्यकार्यमनुष्ठीयते। यदेष [10]सारमेयोऽपवित्रः स्कन्धाधिरूढो नीयते। उक्तञ्च यतः—

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः।
रासभोष्ट्रौ विशेषेण तस्मात्तान्नैव संस्पृशेत् ॥ ११३ ॥

ततश्च तेन [11]कोपाभिभूतेनाभिहितम्—अहो! किमन्धो भवान् यत्पशुं सारमेयं प्रतिपादयसि। सोऽब्रवीत्—'ब्रह्मन्! कोपस्त्वया न कार्यः। यथेच्छं गम्यताम्' इति। अथ यावत्किञ्चिदध्वनोऽन्तरं गच्छति तावद् द्वितीयो धूर्तः सम्मुखे समुपेत्य तमुवाच—भो! ब्रह्मन्! कष्टं कष्टम्। यद्यपि वल्लभोऽयं ते मृतवत्सः, तथापि स्कन्धमारोपयितुमयुक्तम्। उक्तञ्च यतः—

तिर्यञ्चं मानुषं वापि यो मृतं संस्पृशेत्कुधीः।
पञ्चगव्येन शुद्धिः स्यात्तस्य चान्द्रायणेन वा ॥ ११४ ॥

अथासौ सकोपमिदमाह—भोः! किमन्धो भवान् यत्पशुं मृतवत्सं

---

१. मन्दे वायौ। २. मेघे। ३. पुष्टगात्रः।
४. यागोचितं बलिष्ठं वा।
५. अद्यभवः। ६. शीतमित्यर्थः।
७. विप्रागमनमार्गाद् भिन्नेन मार्गेणेत्यर्थः। ८. अग्निहोत्रिणम्।
९. मूर्खाग्निहोत्रिन्!। १०. कुक्कुरः। ११. कुपितेन।

वदसि । सोऽब्रवीत्—भगवन् ! मा कोपं कुरु । अज्ञानान्मयाभिहितम् । तत्त्वमात्मरुचिं समाचर[1] इति । अथ यावत्स्तोकं[2] वनान्तरं गच्छति तावत्तृतीयोऽन्यवेषधारी धूर्तः सम्मुखः समुपेत्य तमुवाच—भोः ! अयुक्तमेतत । यत्त्वं [3]रासभं स्कन्धाधिरूढं नयसि । तत्त्यज्यतामेषः ।

उक्तञ्च—

यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोऽपि वा ।
सचैलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये ॥ ११५ ॥

तत्त्यजैनं यावदन्यः कश्चिन्न पश्यति । अथासौ तं पशुं रासभं मन्यमानो भयाद् भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य प्रपलायितः । ततस्ते त्रयो मिलित्वा तं पशुमादाय यथेच्छया भक्षितुमारब्धाः । अतोऽहं ब्रवीमि—'बहुबुद्धिसमायुक्ताः' इति । अथवा साध्विदमुच्यते—

अभिनवसेवकविनयैः प्राघुणिकोक्तैर्विलासिनीरुदितैः ;
धूर्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति ॥ ११६ ॥

किञ्च दुर्बलैरपि बहुभिः सह विरोधो न युक्तः । उक्तं च—

बहवो न विरोद्धव्या दुर्जया हि महाजनाः ।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥ ११७ ॥

मेघवर्ण आह—कथमेतत् । स्थिरजीवी कथयति—

## कथा (४)

अस्ति कस्मिंश्चिद्वल्मीके महाकायः कृष्णसर्पोऽतिदर्पो नाम । स कदाचिद्बिलानुसारिमार्गमुत्सृज्यान्येन लघुद्वारेण निष्क्रमितुमारब्धः । निष्क्रामतश्च तस्य महाकायत्वाद्दैववशतया लघुविवरत्वाच्च शरीरे व्रणः समुत्पन्नः । अथ[4] व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश्च । कति व्यापादयति, कति वा ताडयति । अथ प्रभूतत्वाद्विस्तारितबहुव्रणः[5] क्षतसर्वाङ्गोऽतिदर्पः पञ्चत्वमुपागतः । अतोऽहं ब्रवीमि—'बहवो न विरोद्धव्याः' इति । तदत्रास्ति किञ्चिन्मे वक्तव्यमेव । तदवधार्य यथोक्तमनुष्ठीयताम् । मेघवर्ण आह—तत्समादेशय तवादेशो

---

१. यथेच्छसि तथा कुर्वित्यर्थः । २. किञ्चित् ३. गर्दभम् ।
४. व्रणजातरुधिरगन्धमनुगच्छन्तीभिरित्यर्थः । ५. वर्धितव्रणः ।

नान्यथा कर्तव्यः स्थिरजीवी प्राह—वत्स ! समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः तन्मां [१]विपक्षभूतं कृत्वाऽतिनिष्ठुरवचनैर्निर्भर्त्स्य, यथा [२]विपक्षप्रणिधीनां [३]प्रत्ययो भवति तथा [४]समाहृतरुधिरैरालिप्यास्यैव न्यग्रोधस्याधस्तात्प्रक्षिप्य मां गम्यतां पर्वतमृष्यमूकं प्रति । तत्र सपरिवारस्तिष्ठ, यावदहं समस्तान्सपत्नान्सुप्रणीतेन विधिना[५] विश्वास्याभिमुखान्कृत्वा कृतार्थो ज्ञातदुर्गमध्यो दिवसे तानन्धतां प्राप्तान् ज्ञात्वा व्यापादयामि । ज्ञातं मया सम्यक् । नान्यथास्माकं सिद्धिरिति । यतो दुर्गमेतदपसाररहितं[६] केवलं वधाय भविष्यति । उक्तञ्च यतः—

अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते ।
अपसारपरित्यक्तं दुर्गव्याजेन बन्धनम् ॥ ११८ ॥

न च त्वया मदर्थं कृपा कार्या । उक्तं च—

अपि प्राणसमानिष्टान्पालितांल्ललितानपि ।
भृत्यान्युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनम् ॥ ११९ ॥

तथा च—प्राणवद्रक्षयेद् भृत्यान्स्वकायमिव पोषयेत् ।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसङ्गमः ॥ १२० ॥

तत्त्वयाहं नात्रविषये [७]प्रतिषेधनीयः। इत्युक्त्वा तेनसह शुष्ककलहं कर्तुमारब्धः । अथान्ये अस्य भृत्याः स्थिरजीविनम् उच्छृङ्खलवचनै[८]र्जल्पन्तमवलोक्य तस्य वधायोद्यता मेघवर्णेनाभिहिताः—अहो ! निवर्तध्वं यूयम् । अहमेवास्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि। इत्यभिधाय तस्योपरि समारुह्य लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य,आहृतरुधिरेण प्लावयित्वा, तदुपदिष्टमृष्यमूकपर्वतं सपरिवारो गतः। एतस्मिन्नन्तरे कृकालिकया [९]द्विषत्प्रणिधीभूतया तत्सर्वं मेघवर्णस्यामात्यस्य [१०]व्यसनमुलूकराजस्य निवेदितम् । 'यत्तवारिः सम्प्रति भीतः क्वचित्प्रचलितः

१. शत्रुं मत्वेति यावत् ।
२. शत्रोर्गुप्तचराणाम् ।
३. विश्वासः ।
४. कुतोऽप्यानीतै रक्तैः ।
५. सम्यक्प्रकारेणेत्यर्थः ।
६. निर्गमनमार्गशून्यम् ।
७. निवारणीयः ।
८. अशिष्टशब्दैः ।
९. अरिपक्षीयगुप्तचरभूतया
१०. विपत् ।

सपरिवारः, इति अथोलूकाधिपस्तदाकर्ण्यास्तमनवेलायां सामात्यः सपरिजनो वायसवधार्थं प्रचलितः। प्राह च—'त्वर्यतां त्वर्यताम् भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते। उक्तञ्च—

शत्रोः प्रचलने छिद्रमेकमन्यच्च संश्रयम्।
कुर्वाणो जायते वश्यो व्यग्रत्वे राजसेविनाम् ॥ १२१ ॥

एवं ब्रुवाणः समन्तान्न्यग्रोधपादपमधः परिवेष्ट्य व्यवस्थितः। यावन्न कश्चिद्वायसो दृश्यते, तावच्छाखाग्रमधिरूढो हृष्टमना वन्दिभिः [1]अभिष्टूयमानोऽरिमर्दनस्तान्परिजनान्प्रोवाच—अहो! ज्ञायतां तेषां मार्गः। [2]कतमेन मार्गेण [3]प्रनष्टाः काकाः। तद्यावन्न दुर्गं समाश्रयन्ति, तावदेव पृष्ठतो गत्वा व्यापादयामि। उक्तञ्च—

वृत्तिमप्याश्रितः शत्रुरवध्यः स्याज्जिगीषुणा।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम् ॥ १२२ ॥

अथैतस्मिन्प्रस्तावे[4] स्थिरजीवी चिन्तयामास—'यदेतेऽस्मच्छत्रवोऽनुपलब्धास्मद्वृत्तान्ताः[5] यथागतमेव यान्ति। ततो मया न किञ्चित्कृतं भवति। उक्तञ्च—

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम्।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १२३ ॥

तद्वरमनारम्भः, न चारम्भविघातः। तदहमेताञ्शब्दं संश्राव्यात्मानं दर्शयामि' इति विचार्य मन्दं मन्दं शब्दमकरोत्। तच्छ्रुत्वा ते सकला अप्युलूकास्तद्वधाय जग्मुः। अथ तेनोक्तम्—अहो! अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री। मेघवर्णेनैवेदृशीमवस्थां नीतः। तन्निवेदयतात्मस्वाम्यग्रे। तेन सह बहु वक्तव्यमस्ति। अथ तैर्निवेदितः स उलूकराजो विस्मयाविष्टस्तत्क्षणात्तस्य सकाशं गत्वा प्रोवाच—भो! भोः! किमेतां दशां गतस्त्वम्!। तत्कथ्यताम्। स्थिरजीवी प्राह—देव! श्रूयतां तदवस्थाकारणम्। अतीतदिने स दुरात्मा मेघवर्णो युस्मद्व्यापादितप्रभूतवायसानां पीडया युष्माकमुपरि कोपशो-

१. स्तूयमानः। २. केनेत्यर्थः। ३. प्रपलायिताः। ४. प्रसङ्गे। ५. अनुपलब्धोऽज्ञातोऽस्माकं वृत्तान्तो वृत्तं यैस्तेऽस्मदीयं वृत्तमजानन्त इति भावः।

क्रमस्तो युद्धाय प्रचलित आसीत्। ततो मयाभिहितम्—स्वामिन्! न युक्तं भवतस्तदुपरि गन्तुम्[1]। बलवन्त एते, बलहीनाश्च वयम्। उक्तञ्च-

बलीयसा हीनबलो विरोधं-
न भूतिकामो मनसापि वाञ्छेत्।
न वध्यतेऽत्यन्तबलो हि यस्माद्
व्यक्तं प्रणाशोऽस्ति पतङ्गवृत्तेः॥ १२४॥

तत्तस्योपायनप्रदानेन[2] सन्धिरेव युक्तः। उक्तञ्च—

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान्।
दत्त्वा हि रक्षयेत्प्राणान्रक्षितैस्तैर्धनं पुनः॥ १२५॥

तच्छ्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं मामाशङ्कमानेनेमां दशां नीतः। तत्तव पादौ साम्प्रतं मे शरणम्[3]। किं बहुना विज्ञप्तेन। यावदहं प्रचलितुं शक्नोमि, तावत्त्वां तस्यावासे नीत्वा '[4]सर्ववायसक्षयं विधास्यामि' इति।

अथारिमर्दनस्तदाकर्ण्य [5]पितृपितामहक्रमागतमन्त्रिभिः सार्धं मन्त्रयाञ्चक्रे। तस्य च पञ्च मन्त्रिणः। तद्यथा—रक्ताक्षः, क्रूराक्षः, दीप्ताक्षः वक्रनासः, प्राकारकर्णश्चेति। तत्रादौ रक्ताक्षमपृच्छत—भद्र! एष तावत्तस्य रिपोर्मन्त्री मम '[6]हस्तगतः। तत्किं क्रियताम्' इति। रक्ताक्ष आह—देव! किमत्र चिन्त्यते। अविचारितमयं हन्तव्यः। यतः—

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान्भवेत्।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः॥ १२६॥

किञ्च स्वयमुपागता श्रीस्त्यज्यमाना शपतीति लोके [7]प्रवादः। उक्तञ्च—कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम्।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता॥ १२७॥

श्रूयते च यथा—

चितिकां दीपितां पश्य फटां भग्नां ममैव च।

---

१. आक्रमितुमित्यर्थः।
२. उपहारार्पणेन।
३. साम्प्रतं त्वमेव मम रक्षकोसीत्यर्थः।
४. समस्तकाकविनाशम्।
५. कुलक्रमागरिति तैर्यावत्।
६. मदधीन इत्यर्थः।
७. किंवदन्ती।

भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ॥ १२८ ॥

अरिमर्दनः प्राह—कथमेतत् । रक्ताक्षः कथयति—

## कथा (५)

अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः । तस्य च कृषिं कुर्वतः सदैव [1]निष्फलः कालोऽतिवर्तते[2] । अथैकस्मिन्दिवसे स ब्राह्मण उष्णकालावसाने घर्मार्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तोऽनतिदूरे वल्मीकोपरि प्रसारितं बृहत्फटायुक्तं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास—नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता । तेनेदं मे कृषिकर्म विफलीभवति । तदस्या अहं पूजामद्य करिष्यामि । इत्यवधार्य कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकमुपागम्योवाच—'भो! क्षेत्रपाल ! मयैतावन्तं कालं न ज्ञातं यत्त्वमत्र वससि तेन पूजा न कृता । तत्साम्प्रतं क्षमस्व' इति । एवमुक्त्वा दुग्धं च निवेद्य गृहाभिमुखं प्रायात् । अथ प्रातर्यावदागत्य पश्यति तावद् [3]दीनारमेकं शरावे दृष्टवान् । एवञ्च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति । एकैकं च दीनारं गृह्णाति । अथैकस्मिन्दिवसे वल्मीके क्षीरनयनाय पुत्रं [4]निरूप्य ब्राह्मणो ग्रामान्तरं जगाम । पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः । दिनान्तरे तत्र गत्वा दीनारमेकं च दृष्ट्वा गृहीत्वा च चिन्तितवान्—नूनं सौवर्णदीनारपूर्णो वल्मीकः । तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामि । इत्येवं सम्प्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः । ततः कथमपि दैववशादमुक्तजीवित[5] एव रोषात्तमेव तीव्रविषदशनैस्तथाऽदशत्, यथा स सद्यः पञ्चत्वमुपागतः । स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसञ्चयैः संस्कृतः[6] । अथ द्वितीयदिने तस्य पिता समायातः । स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान् । अब्रवीच्च—

भूतान्यो नानुगृह्णाति ह्यात्मनः शरणागतान् ।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा ॥ १२९ ॥

---

१. सस्यलाभाभावेन व्यर्थ इत्यर्थः । २. व्यतीतो भवतीति यावत् ।
३. स्वर्णमुद्राभेदम् । ( मोहर ) ४. नियुज्य ।
५. न मृत इत्यर्थः । ६. दग्धः ।

पुरुषैरुक्तम्—कथमेतत् । ब्राह्मणः कथयति—

## कथा (६)

अस्ति कस्मिंश्चिदधिष्ठाने चित्ररथो नाम राजा । तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति । तत्र च प्रभूताः [1]जाम्बूनदमया हंसास्तिष्ठन्ति । षण्मासे पिच्छमेकैकं परित्यजन्ति । अथ तत्र सरसि सौवर्णो बृहत्पक्षी समायातः । तैश्चोक्तः—अस्माकं मध्ये त्वया न वस्तव्यम्, येन कारणेनास्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत्सरः । एवं च किं बहुना परस्परं [2]द्वैधमुत्पन्नम् । स च राज्ञः शरणं गतोऽब्रवीत्—देव ! एते पक्षिण एवं वदन्ति यदस्माकं राजा किं करिष्यति ! न कस्याप्यावासं दद्मः । मया चोक्तम्—न शोभनं युस्माभिरभिहितम् । अहं गत्वा राज्ञे निवेदयिष्यामि । एवं स्थिते देवः प्रमाणम् । ततो राजा भृत्यानब्रवीत्—भो ! भोः ! गच्छत सर्वान्पक्षिणः [3]गतासून्कृत्वा शीघ्रमानयत । राजादेशानन्तरमेव [4]प्रचेलुस्ते । अथ लगुडहस्तान्राजपुरुषान्दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तम्-भोः ! स्वजनाः ! न शोभनमापतितम् । ततः सर्वैरेकमतीभूय शीघ्रमुत्पतितव्यम्[5] । तैश्च तथानुष्ठितम् । अतोऽहं ब्रवीमि—'भूतान्यो नानुगृह्णाति' इति । इत्युक्त्वा पुनरपि ब्राह्मणः [6]प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पमस्तौत्[7] । तदा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच—त्वं लोभादत्रागतः पुत्रशोकमपि विहाय । अतः परं तव मम च प्रीतिर्नोचिता । तव पुत्रेण [8]यौवनोन्मदेनाहं ताडितः । मया स दष्टः । कथं मया लगुडप्रहारो विस्मर्तव्यः, त्वया च पुत्रशोकदुःखं कथं विस्मर्तव्यम्' इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा 'अतः परं पुनस्त्वया नागन्तव्यम्' इति पुनरुक्त्वा विवरान्तर्गतः । ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन्स्वगृहमागतः । अतोऽहं ब्रवीमि–'चितिकां दीपितां पश्य' । तदस्मिन्हतेऽयत्नादेव

---

१. कनकमयाः । २. वैरम् । ३. मारयित्वेत्यर्थः । ४. प्रस्थानं कृतवन्तः । ५. उड्डयितव्यम् । ६. प्रातःकाले । ७. सर्पस्य स्तुतिः कृतेत्यर्थः । ८. यौवनोन्मत्तेनेत्यर्थः ।

राज्यमकण्टकं[1] भवतो भवति! तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ-भद्र! त्वं तु किं मन्यसे। सोऽब्रवीत्-देव! [2]निर्दयमेतत् यदनेनाभिहितम्। यत्कारणं शरणागतो न वध्यते। सुष्ठु खल्विदमाख्यातम।

श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः॥ १३०॥

अरिमर्दनोऽब्रवीत्-कथमेतत्। क्रूराक्षः कथयति—

## कथा (७)

कश्चित्क्षुद्रसमाचारः प्राणिनां कालसन्निभः।
विचचार महारण्ये घोरः शकुनिलुब्धकः॥ १३१॥
नैव कश्चित्सुहृत्तस्य न सम्बन्धी न बान्धवः।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा॥ १३२॥

अथवा—

ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते॥ १३३॥
स पञ्जरकमादाय पाशं च लगुडं तथा।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः॥ १३४॥
अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका।
जाता हस्तगता तां स प्राक्षिपत्पञ्जरान्तरे॥ १३५॥
अथ कृष्णा दिशः सर्वा वनस्थस्याभवन् घनैः।
वातवृष्टिश्च महती क्षयकाल इवाभवत्॥ १३६॥
ततः स त्रस्तहृदयः कम्पमानो मुहुर्मुहुः।
अन्वेषयन्परित्राणमाससाद वनस्पतिम्॥ १३७॥
मुहूर्तं पश्यते यावद्वियद्विमलतारकम्।
प्राप्य वृक्षं वदत्येवं योऽत्र तिष्ठति कश्चन॥ १३८॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति।
शीतेन भिद्यमानं च क्षुधया गतचेतसम्॥ १३९॥

---

१. शत्रुरहितं निर्बाधमिति यावत्। २. अत्यन्तमनुचितमिति भावः।

अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः ।
भार्याविरहितस्तिष्ठन्विललाप सुदुःखितः ॥ १४० ॥
वातवर्षो महानासीन्न चागच्छति मे प्रिया ।
तया विरहितं ह्येतच्छून्यमद्य गृहं मम ॥ १४१ ॥
पतिव्रता पतिप्राणा पत्युः प्रियहिते रता ।
यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि ॥ १४२ ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम् ॥ १४३ ॥
पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः ।
कपोतिका सुसंतुष्टा वाक्यं चेदमथाह सा ॥ १४४ ॥
न सा स्त्रीत्यभिमन्तव्या यस्यां भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ १४५ ॥
दावाग्निना विदग्धेव सपुष्पस्तवका लता ।
भस्मी भवतु सा नारी यस्यां भर्ता न तुष्यति ॥ १४६ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १४७ ॥

पुनश्चाब्रवीत्—

शृणुष्वावहितः कान्त ! यत्ते वक्ष्याम्यहं हितम् ।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १४८ ॥
एष शाकुनिकः शेते तवावासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजमस्मै समाचर ॥ १४९ ॥

श्रूयते च—

यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ।
तस्यासौ दुष्कृतं दत्त्वा सुकृतं चापकर्षति ॥ १५० ॥
मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाहं प्राक्तनैः कर्मबन्धनैः ॥ १५१ ॥
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १५२ ॥
तस्मात्त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् ।

धर्मे मनः समाधाय पूजयैनं यथाविधि ॥ १५३ ॥
तस्यास्तद्वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १५४ ॥
भद्र ! सुस्वागतं तेऽस्तु ब्रूहि किं करवाणि ते ।
संतापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥ १५५ ॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमम् ।
कपोत ! खलु शीतं मे हिमत्राणं विधीयताम् ॥ १५६ ॥
स गत्वाङ्गारकं नीत्वा पातयामास पावकम् ।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत् ॥ १५७ ॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम् ।
संतापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः ॥
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम् ॥ १५८ ॥
सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥ १५९ ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ॥ १६० ॥
तत्तथा साधयाम्येतच्छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥ १६१ ॥
स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां मुहुर्तं प्रतिपालय ॥ १६२ ॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं संपरिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १६३ ॥
ततस्तं लुब्धको दृष्ट्वा कृपया पीडितो भृशम् ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १६४ ॥
यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १६५ ॥
सोऽहं पापमतिश्चैव पापकर्मरतः सदा ।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १६६ ॥
नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।

प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १६७ ॥
अद्यप्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मे शोषयिष्याम्यहं पुनः ॥ १६८ ॥
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुभिर्धैश्चरिष्ये धर्ममुत्तमम् ॥ १६९ ॥
ततो यष्टिं शलाकां च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीं च मुमोच ताम् ॥ १७० ॥
लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिम् ।
कपोती विललापार्ता शोकसंतप्तमानसा ॥ १ १ ॥
न कार्यमद्य मे नाथ! जीवितेन त्वया विना ।
दीनायाः पतिहीनायाः किं नार्या जीविते फलम् ॥ १७२ ॥
मनोदर्पस्त्वहङ्कारः कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १७३ ॥
एवं विलप्य बहुशः कृपणं भृशदुःखिता ।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १७४ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता ।
भर्तारं सा विमानस्थं ददर्श स्वं कपोतिका ॥ १७५ ॥
सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत् ।
अहो! मामनुगच्छन्त्या कृतं साधु शुभे! त्वया ॥ १७६ ॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥ १७७ ॥
कपोतदेहः सूर्यास्ते प्रत्यहं सुखमन्वभूत् ।
कपोतदेहवत्सासीत्प्राक्पुण्यप्रभवं हि तत् ॥ १७८ ॥
हर्षाविष्टस्ततो व्याधो विवेश च वनं घनम् ।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान्भृशम् ॥ १७९ ॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः ।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८० ॥

अतोऽहं ब्रवीमि—'श्रूयते हि कपोतेन' इति

तच्छ्रुत्वारिमर्दनो दीप्ताक्षं पृष्टवान्—एवमवस्थिते किं भवान् मन्यते।

साऽब्रवीत्—देव ! न हन्तव्य एवायम् ।

चौरस्याप्युपकारिणः [1]श्रेयश्चिन्त्यते किं पुनर्न शरणागतस्य । अपि चायं तैर्विप्रकृतः[2] अस्माकमेव पुष्ट्यै भविष्यति तदीयरन्ध्रदर्शनाय चेति । अनेककारणेनायमवध्यः' इति । एतदाकर्ण्यारिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ—भद्र ! सांप्रतमेवंस्थिते किं कर्तव्यम । सोऽब्रवीत्—देव अवध्योऽयम् यतः—

शत्रवोऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम् ॥ १८१ ॥

अरिमर्दनः प्राह—कथमेतत् । वक्रनाशः कथयति—

## कथा (८)

अस्ति कस्मिंश्चिदधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः [3]प्रतिग्रहधनः सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालंकारताम्बूलादिभोगपरिवर्जितः [4]प्ररूढकेशश्मश्रुनखरोमोपचितः शीतोष्णवातवर्षादिभिः [5]परिशोषितशरीरः । तस्य च केनापि यजमानेनानुकम्पया शिशुगोयुगं दत्तम् । ब्राह्मणेन च बालभावादारभ्य याचितघृततैलयवसादिभिः संवर्ध्य सुपुष्टं कृतम् । तच्च दृष्ट्वा सहसैव कश्चिच्चौरश्चिन्तितवान्—अहमस्य ब्राह्मणस्य गोयुगमिदमपहरिष्यामि । इति निश्चित्य निशायां बन्धनपाशं गृहीत्वा यावत्प्रस्थितः, तावदर्धमार्गे [6]प्रविरलतीक्ष्णदन्तपङ्क्तिः [7]उन्नतनासावंशः [8]प्रकटरक्तान्तनयन [9]उपचितस्नायुसंततिर्नतगात्रः शुष्ककपोलः [10]सुहुतहुतवहपिङ्गलश्मश्रुकेशशरीरः कश्चिद् दृष्टः । दृष्ट्वा च तं तीव्रभयत्र-

---

१. मङ्गलम् । २. तिरस्कृतोऽपकृत इत्यर्थः । ३. दानोपजीवी ।

४. क्षौरकर्माभावेन वृद्धिं प्राप्तैः केशैः श्मश्रुभिः नखै रोमभिश्च व्याप्त इत्यर्थः ।

५. कृशगात्रः ।

६. प्रविरला अत्यल्पा तीक्ष्णा च दन्तानां पङ्क्तिर्यस्य स स्वल्पदन्त इति यावत् ।

७. उन्नतनासिकः । (८) रक्तनयन इति भावः ।

९. उपचिता कृशत्वेन हेतुना देहाद्बहिः निर्गता स्नायुसन्ततिः नाडीनां समूहः यस्य सः ।

१०. सुहुतोऽतिशयेन तर्पितो हुतवहो येन सोऽत एव पिङ्गलानि कपिशवर्णानि श्मश्रुकेशशरीराणि यस्य सः ।

स्तोऽपि चौरोऽब्रवीत्–को भवान्! इति। स आह–'सत्यवचनोऽहं ब्रह्मराक्षसः। भवानप्यात्मानं निवेदयतु।' सोऽब्रवीत्–अहं क्रूरकर्मा चौरः। दरिद्रब्राह्मणस्य गोयुगं हर्तुं प्रस्थितोऽस्मि। अथ जातप्रत्ययो राक्षसोऽब्रवीत्—भद्र! "[1]षष्ठाह्नकालिकोऽहम्। अतस्तमेव ब्राह्मणमद्य भक्षयिष्यामि। तत्सुन्दरमिदम्। एककार्यावेवावाम्।' अथ तौ तत्र गत्वैकान्ते कालमन्वेषयन्तौ[2] स्थितौ। प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्—भद्र! नैष न्यायः, यतो गोयुगे मयापहृते पश्चात्त्वमेनं ब्राह्मणं भक्षय।' सोऽब्रवीत्—कदाचिदयं ब्राह्मणो गोशब्देन बुध्येत, तदानर्थकोऽयं ममारम्भः स्यात्। चौरोऽप्यब्रवीत्–तवापि यदि भक्षणायोपस्थितस्यान्तर एकोऽप्यन्तरायः[3] स्यात्, तदाहमपि न शक्नोमि गोयुग्ममपहर्तुम्। अतः प्रथमं मयापहृते गोयुगे पश्चात्त्वया ब्राह्मणो भक्षयितव्यः। इत्थं चाहमहमिकया[4] तयोर्विवदतोः समुत्पन्ने "[5]द्वैधे प्रतिरववशाद् ब्राह्मणो जजागार। अथ तं चौरोऽब्रवीत्—ब्राह्मण! त्वामेवायं राक्षसो भक्षयितुमिच्छति इति। राक्षसोऽप्याह—ब्राह्मण! चौरोऽयं गोयुगं तेऽपहर्तुमिच्छति। एवं श्रुत्वोत्थाय ब्राह्मणः सावधानो भूत्वा [6]इष्टदेवतामन्त्रध्यानेनात्मानं राक्षसादुद्गूर्णलगुडेन[7] च चौराद्गोयुगं ररक्ष। अतोऽहं ब्रवीमि—'शत्रवोऽपि हितायैव' इति॥

अथ तस्य वचनमवधार्यारिमर्दनः पुनरपि प्राकारकर्णमपृच्छत्—कथय किमत्र मन्यते भवान्। सोऽब्रवीत्—देव! अवध्य एवायम्, यतो रक्षितेनानेन कदाचित् परस्परप्रीत्या कालः सुखेन गच्छति। उक्तञ्च—

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।
त एव निधनं यान्ति वल्मीकोदरसर्पवत्॥ १८२॥

अरिमर्दनोऽब्रवीत्—कथमेतत्। प्राकारकर्णः कथयति—

---

१. अह्नः षष्ठो भाग इति षष्ठाह्नः स एव कालः षष्ठाह्नकालः तत्र भुङ्क्तेयः स तथाभूतः दिनस्य षष्ठे प्रहरे कृतभोजननियम इति भावः। २. प्रतीक्षमाणौ ३. बाधा। ४. अहं पूर्वमहं पूर्वमिति कथनोपकथनेन इति भावः। ५. कलहे। ६. इष्टाया देवताया मन्त्रध्यानेन मन्त्रोच्चारणपूर्वकं स्मरणेन। ७. उत्क्षिप्तेन दण्डेनेत्यर्थः।

# कथा (६)

अस्ति कस्मिंश्चिन्नगरे देवशक्तिर्नाम राजा। तस्य च पुत्रो [1]जठर-वल्मीकाश्रयेणोरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते। [2]अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्यापि चिकित्स्यमानो न स्वस्थ्यमाप्नोति। अथासौ राजपुत्रो [3]निर्वेदाद्देशान्तरं गतः। कस्मिंश्चिन्नगरे भिक्षाटनं कृत्वा महति देवालये कालं यापयति। अथ तत्र नगरे बलिर्नाम राजास्ते। तस्य च द्वे दुहितरौ यौवनस्थे तिष्ठतः। ते च प्रतिदिवसमादित्योदये पितुः पादान्तिकमागत्य नमस्कारं चक्रतुः। तत्र चैकाब्रवीत् -विजयस्व महाराज! यस्य प्रसादात्सर्वं सुखं लभ्यते। द्वितीया तु [4]विहितं भुङ्क्ष्व महाराज! इति ब्रवीति। तच्छ्रुत्वा प्रकुपितो राजाब्रवीत्—भो! मन्त्रिन्! एनां दुष्टभाषिणीं कुमारिकां कस्यचिद्वैदेशिकस्य[5] प्रयच्छ। येन निजविहितमियमेव भुङ्क्ते। अथ 'तथा' इति [6]प्रतिपद्य अल्पपरिवारा सा कुमारिका-मन्त्रिभिस्तस्य देवकुलाश्रितराजपुत्रस्य प्रतिपादिता। साऽतिप्रहृष्टमानसा तं पतिं देववत्प्रतिपद्यादाय चान्यविषयं[7] गता। ततः कस्मिंश्चिद् दूरतरनगरप्रदेशे तडागतटे राजपुत्रमावासरक्षायै निरुप्य[8] स्वयं च घृत-तैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता। कृत्वा च क्रयविक्रयं यावदागच्छति तावत्स राजपुत्रो वल्मीकोपरि कृतमूर्धा प्रसुप्तः। तस्य च मुखाद् भुजगः फणां निष्क्रास्य वायुमश्नाति तत्रैव च वल्मीकेऽपरः सर्पो निष्क्रम्य तथैवासीत्। अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचन-योर्मध्याद्वल्मीकस्थेन सर्पेणोक्तम्—भो! भो! दुरात्मन्। कथं सुन्दरसर्वाङ्गं राजपुत्रमित्थं [9]कदर्थयसि। मुखस्थोऽहिरब्रवीत्—भो! भोः! त्वयापि दुरात्मनास्य वल्मीकस्य मध्ये कथमिदं दूषितं [10]हाटकपूर्णं कलशयुगलम्। इत्येवं परस्परस्यमर्माण्युद्घाटितवन्तौ। पुनर्वल्मीकस्थोऽ-

---

1. जठरमेव वल्मीकं जठरवल्मीकं तदेव आश्रयो यस्यं स तेन उदरस्थितेनेति यावत्। 2. बहुभिः प्रतीकारोपायैः। 3. खेदात्।
4. कृतकर्मफलम्। [5]. अन्यदेशीयस्य जनस्य।
6. स्वीकृत्य। 7. अन्यं देशम्। 8. नियुज्येत्यर्थः।
9. पीडयसि। 10. स्वर्णपूरितम्।

हिरब्रवीत्—भो ! दुरात्मन् ! भेषजमिदं ते किं कोऽपि न जानाति [1]यज्जीर्णोत्फालितकाञ्जिकराजिकापानेन भवान्विनाशमुपयाति । अथोदरस्थोऽहिरब्रवीत्—'तवाप्येतद् भेषजं किं कश्चिदपि न वेत्ति, यदुष्णतैलेन वा महोष्णोदकेन तव विनाशः स्यात्' इति । एवं च सा राजकन्या [2]विटपान्तरिता तयोः परस्परालापान्मर्ममयानाकर्ण्य तथैवानुष्ठितवति। विधायाव्यङ्गं नीरोगं भर्तारं निधिं च परमासाद्य स्वदेशाभिमुखं [3]प्रायात् । पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेनावस्थिता। अतोऽहं ब्रवीमि–'परस्परस्य मर्माणि' इति । तच्च श्रुत्वा स्वयमरिमर्दनोऽप्येवं [4]समर्थितवान् [5]तथा चानुष्ठितं दृष्ट्वान्तर्लीनं[6] विहस्य रक्ताक्षः पुनरब्रवीत्—कष्टं ! विनाशितोऽयं भवद्भिरन्यायेन स्वामी । उक्तं च—

अपूज्या यत्र पूज्यन्ते पूज्यानां तु विमानना ।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥ १८३ ॥

तत्सर्वथा मूलोत्खाता[7] वयं विनष्टाः स्मः । सुष्ठु खल्विदमुच्यते—

मित्ररूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः ।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः ॥ १८४ ॥

तथा च—सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः ।
अप्राज्ञान्मन्त्रिणः प्राप्य तमः सूर्योदये यथा ॥ १८५ ॥

ततस्तद्वचोऽनादृत्य सर्वे ते स्थिरजीविनमुत्क्षिप्य[8] स्वदुर्गमानेतुमारब्धाः । अथानीयमानः स्थिरजीव्याह—देव ! अद्य [9]अकिञ्चित्करेणैतदवस्थेन किं मयापसंगृहीतेन[10] यत्कारणमिच्छामि दीप्तं वह्निमनुप्रवेष्टुम्। तदर्हसि मामग्निप्रदानेन [11]समुद्धर्तुम् । अथ रक्ताक्षस्तस्यान्तर्गतभावं ज्ञात्वाब्रवीत्—किमर्थमग्निपतनमिच्छसि ? सोऽब्रवीत्—अहं तावद्युष्म-

---

१. जीर्णयोः पुरातनयोः उत्फालितयोः सम्यक्प्रकारेण मिश्रितयोः काञ्जिकराजिकयोः पानेन । २. शाखान्तरालस्थिता । ३. अगच्छादित्यर्थः ।
४. निर्णीतवान् । ५. शरणागतकाकस्य रक्षणं दृष्ट्वेत्यर्थः ।
६. अस्पष्टम् । ७. समूलं विनाशिता इत्यर्थः ।
८. उत्थाप्य । ९. किमपि कर्तुमसमर्थेन ।
१०. सङ्ग्रहं गृहीतेन । ११. रक्षितुम् ।

दृथ इमामापदं मेघवर्णेन प्रापितः। तदिच्छामि तेषां वैरयातनार्थमुलूकत्वम् [1]इति। तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह—भद्र! कुटिलस्त्वं कृतकवचनचतुरश्च। तत्त्वमुलूकयोनिगतोऽपि स्वकीयामेव वायसयोनिं बहुमन्यसे। श्रूयते चैतदाख्यानकम्[2]—

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा॥ १८६॥

मन्त्रिणः प्रोचुः—कथमेतत्। रक्ताक्ष कथयति—

## कथा (१०)

अस्ति [3]विषमशिलातलस्खलिताम्बुनिर्घोषश्रवणसंत्रस्तमत्स्यपरिवर्तनसञ्जनितश्वेतफेनशवलतरङ्गाया गङ्गायास्तटे [4]जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः [5]परिपूतपरिमितजलजिघृक्षुभिः [6]कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैः [7]वल्कलकृतकौपीनमात्रप्रच्छादनैस्तपस्विभिः [8]आकीर्णम् [9]आश्रमपदम्। तत्र याज्ञवल्क्यो नाम [10]कुलपतिरासीत्। तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य[11] करतले श्येनमुखात्परिभ्रष्टा मूषिका पतिता। तां दृष्ट्वा न्यग्रोधपत्रेऽवस्थाप्य

---

१. उलूकस्य जन्मेत्यर्थः।                                   २. इतिवृत्तं कथेति यावत्।

३. विषमेषु नतोन्नतेषु शिलातलेषु प्रस्तरेषु स्खलितानां पतितानाम् अम्बूनां जलानां निर्घोषस्य कलकलस्य श्रवणेन सन्त्रस्ताः भीता ये मत्स्यास्तेषां परिवर्तनेन सञ्जनिताः श्वेताः शुक्ला ये फेनास्तैः शवलाश्चित्रिता मिश्रिता इति भावः तरङ्गा यस्याः ता॥ तस्याः।

४. स जपः मन्त्रोच्चारणम्, नियमः = इन्द्रियनिग्रहः, तपः = चान्द्रायणादि, स्वाध्यायः = वेदस्य अध्ययनम्, उपवासः = अनाहारनियमः, योगः = चित्तवृत्तिनिरोधः, क्रिया = होमादिका आसाम्, अनुष्ठानम् = करणम्, परम् = प्रधानम्, अयनम् = आश्रयो येषां तैः।                                   ५. स्वल्पजलपायिभिः।

६. कन्दानां मूलविशेषाणां मूलानां मूलकादीनां फलानां कदलीप्रभृतीनां शैवलानाञ्च अभ्यवहारेण भोजनेन कदर्थितानि शोषितानि शरीराणि यैस्तैस्तथाभूतैः।

७. वल्कलेन वृक्षत्वचा कृतं निर्मितं यत् कौपीनं तदेव तन्मात्रं प्रच्छादनं वस्त्रं येषां तैः।                   ८. व्याप्तम्।                   ९. तपोवनम्।

१०. बहुतापसाधिपतिरित्यर्थः।                   ११. आचमितुमुपक्रान्तस्येति यावत्।

पुनः स्नात्वोपस्पृश्य च प्रायश्चित्तादिक्रियां कृत्वा च मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रमानिनाय। अनपत्यां च जायामाह—भद्रे ! गृह्यतामियं तव दुहितोत्पन्ना प्रयत्नेन संवर्धनीयेति। ततस्तया संवर्धिता लालिता पालिता च यावद् द्वादशवर्षा सञ्जज्ञे। अथ विवाहयोग्यां तां दृष्ट्वा भर्तारमेवं जायोवाच—भो! भर्तः! किमिदं नावबुध्यसे यथास्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति ?। असावाह—साधूक्तम्। अतोऽहमेनां सदृशाय प्रयच्छामि, नान्यस्मै। उक्तञ्च—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ १८७ ॥

तथा च—कुलं च शीलं च सनाथता च
विद्या च वित्तं च वपुर्वयश्च।
एतान्गुणान्सप्त विचिन्त्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥ १८८ ॥

तद्यद्यस्या रोचते तदा भगवन्तमादित्यमाहूय तस्मै प्रयच्छामि। सा प्राह—इह को दोषः, क्रियतामेतत्। अथ मुनिना रविराहूतः। वेदमन्त्रामन्त्रणप्रभावात्तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच—भगवन्! किमहमाहूतः ?। सोऽब्रवीत्—'एषा मदीया कन्यका तिष्ठति यद्येषा त्वां वृणोति तदुद्वहस्व' इति। एवमुक्त्वा स्वदुहितरमुवाच—'पुत्रि ! किं तव रोचत एष भगवाँस्त्रैलोक्यदीपको[1] भानुः ?। पुत्रिकाऽब्रवीत्—तात ! अतिदहनात्मकोऽयं, नाहमेनमभिलाषामि। तदस्मादन्यः [2]प्रकृष्टतरः कश्चिदाहूयताम्। अथ तस्यास्तद्वचनं श्रुत्वा मुनिर्भास्करमुवाच—भगवन्! त्वत्तोऽप्यधिकोऽस्ति कश्चित् ?। भास्करः प्राह—अस्ति मत्तोऽप्यधिको मेघो येनाच्छादितोऽहमदृश्यो भवामि। अथ मुनिना मेघमप्याहूय कन्याभिहिता—पुत्रिके ! अस्मै त्वां प्रयच्छामि ?। सा प्राह—कृष्णवर्णोऽयं [3]जडात्मा च। तदस्मादन्यस्य प्रधानस्य कस्यचिन्मां प्रयच्छ। अथ मुनिना मेघोऽपि पृष्टः—भो ! मेघ ! त्वत्तोऽप्यधिकोऽस्ति कश्चित् ? मेघे-

१. त्रिभुवनप्रकाशकारी। २. श्रेष्ठ इति भावः।
३. अचेतनः यद्वा डलयोरैक्याजलमयत्वेन शीतल इत्यर्थः।

नोक्तं,—मत्तोऽपि अधिकोऽस्ति वायुः। वायुना [1]हतोऽहं सहस्रधा यामि। तच्छ्रुत्वा मुनिना वायुराहूतः। आह च—पुत्रिके! किमेष वायुस्ते विवाहायोत्तमः प्रतिभाति?। साब्रवीत्—तात! अतिचपलोऽयम्। तदस्मादप्यधिकः कश्चिदानीयताम्। मुनिराह-वायो! त्वत्तोऽप्यधिकोऽस्ति कश्चित्?! पवनेनोक्तम्—मत्तोऽप्यधिकोऽस्ति पर्वतः, येन [2]संस्तभ्य बलवानप्यहं ध्रिये। अथ मुनिः पर्वतमाहूय कन्यामुवाच-पुत्रिके! त्वामस्मै प्रयच्छामि?। सा प्राह--तात! कठिनात्मकोऽयं [3]स्तब्धश्च। तदन्यस्मै देहि माम्। मुनिना पर्वतः पृष्टः-भोः! पर्वतराज! त्वत्तोऽप्यधिकोऽस्ति कश्चित्?। गिरिणोक्तम्-मत्तोऽप्यधिकाः सन्ति मूषिका ये मच्छरीरं बलाद्विदारयन्ति। ततो मुनिर्मूषिकमाहूय तस्या अदर्शयत्। आह च-पुत्रिके! त्वामस्मै प्रयच्छामि किमेष प्रतिभाति ते मूषिकराजः?। सापि तं दृष्ट्वा स्वजातीय एष इति मन्यमाना [4]पुलकोद्भूषितशरीरा उवाच--तात! मां मूषिकां कृत्वास्मै प्रयच्छ येन स्वजातिविहितं गृहधर्ममनुतिष्ठामि। ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वा तस्मै प्रादात्। अतोऽहं ब्रवीमि— सूर्यं भर्तारमुत्सृज्य' इति। अथ रक्ताक्षवचनमनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गमुपनीतः। नीयमानश्चान्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत्—

हन्यतामिति येनोक्तं स्वामिनो हितवादिना।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित्॥ १८९॥

तद्यदि तस्य वचनमकरिष्यन्नेते ततो न स्वल्पोऽप्यनर्थोऽभविष्यदेतेषाम्। अथ दुर्गद्वारं प्राप्यारिमर्दनोऽब्रवीत्-भो! भोः! हितैषिणोऽस्य स्थिरजीविनो यथासमीहितं स्थानं प्रयच्छत। तच्च श्रुत्वा स्थिरजीवो व्यचिन्तयत्—मया तावदेतेषां वधोपायश्चिन्तनीयः, स मया [5]मध्यस्थेन न साध्यते। यतो मदीयमिङ्गितादिकं [6]विचारयन्तस्तेऽपि सावधाना भविष्यन्ति। तद् दुर्गद्वारमधिश्रितोऽभिप्रेतं साधयामि इति निश्चित्यो-

---

१. खण्डित इत्यर्थः। २. निर्जित्येतिभावः। ३. निश्चयः।
४. पुलकेन हर्षजनितेन रोमाञ्चेन उद्भूषितं शरीरं यस्याः सा।
५. उदासीनेन निरुद्योगेनेति यावत्।
६. मनोभावादिकं चेष्टादिकमिति भावः।

लूकपतिमाह—देव ! युक्तमिदं यत्स्वामिना प्रोक्तम्। परमहमपि नीतिज्ञस्तेऽहितश्च यद्यप्यनुरक्तः शुचिस्तथापि दुर्गमध्ये [1]आवासो [2]नार्हः। तदहमत्रैव दुर्गद्वारस्थः प्रत्यहं [3]भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि। 'तथा' इति [4]प्रतिपन्ने प्रतिदिनमुलूकपतिसेवकास्ते प्रकामभाहारं कृत्वोलूकराजादेशात्प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति। अथ कतिपयैरेवाहोभिर्मयूर इव स बलवान्संवृत्तः। अथ रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानं च प्रत्याह—अहो! मूर्खोऽयं मन्त्रिजनो भवांश्चेत्येवमहमवगच्छामि। उक्तं च—

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम्॥ १९०॥

ते प्राहुः—कथमेतत्। रक्ताक्षः कथयति—

## कथा (११)

अस्ति कस्मिंश्चित्पर्वतैकदेशे महान्वृक्षः। तत्र च सिन्धुकनामा कोऽपि पक्षी प्रतिवसति स्म। तस्य [5]पुरीषे सुवर्णमुत्पद्यते। अथ कदाचित् तमुद्दिश्य व्याधः कोऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज। अथ [6]पातसमकालमेव तत्सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत—अहो! मम शिशुकालादारभ्य [7]शकुनिबन्धव्यसनिनोऽशीतिवर्षाणि समभूवन्। न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टम्। इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध। अथासावपि पक्षी मूर्खस्तत्रैव विश्वस्तचित्तो यथापूर्वमुपविष्टः तत्कालमेव पाशेन बद्धः। व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथ चिन्तयामास-किमनेन [8]सापायेन पक्षिणाहं करिष्यामि। यदि कदाचित्कोऽप्यमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति तन्नूनं [9]प्राणसंशयो मे भवेत्। अतः स्वयमेव पक्षिणं राज्ञे

१. अवस्थितः। २. नोचित इत्यर्थः।
३. भवतां पादपद्मरजोभिः चरणकमलधूलिभिः पवित्रीकृता तनुः शरीरं यस्य सः। ४. स्वीकृते सति।
५. विष्ठायाम्। ६. पतनकाल एवेत्यर्थः। ७. पक्षिबन्धनैककर्मणः।
८. विपज्जनकेन। ९. महासङ्कट इत्यर्थः।

निवेदयामि । इति विचार्य तथैवानुष्ठितान् । अथ राजापि तं पक्षिणं दृष्ट्वा [1]विकसितनयनवदनकमलः परां तुष्टिमुपागतः । प्राह चैवम्–हंहो रक्षापुरुषाः ! एनं पक्षिणं यत्नेन रक्षत । आशनपानादिकं चास्य यथेच्छं प्रयच्छत । अथ मन्त्रिणाभिहितम्—किमनेनाश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेन[2] अण्डजेन[3], किं कदाचित्पक्षिपुरीषे सुवर्णं सम्भवति ! तन्मुच्यतां पञ्जरबन्धनादयं पक्षी । इति मन्त्रिवचनाद्राज्ञा मोचितोऽसौ पक्ष्युन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्ठां विधाय 'पूर्वं तावदहं मूर्खः इति श्लोकं पठित्वा यथासुखमाकाशमार्गेण प्रायात् । अतोऽहं ब्रवीमि–'पूर्वं तावदहं मूर्खः' इति । अथ ते पुनरपि [4]प्रतिकूलदैवतया हितमपि रक्ताक्षवचनमनादृत्य भूयस्तं प्रभूतमांसादिविविधाहारेण पोषयामासुः । अथ रक्ताक्षः-स्ववर्गमाहूय रहः प्रोवाच–अहो! एतावदेवास्मद्भूपतेः कुशलं दुर्गं च । तदुपदिष्टं मया यत्कुलक्रमागतः[5] सचिवोऽभिधत्ते । तद्वयमन्यत्पर्वतदुर्गं सम्प्रति समाश्रयामः । उक्तं च यतः—

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम् ।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता ॥ १९१ ॥

ते प्रोचुः—कथमेतत् । रक्ताक्षः कथयति—

## कथा (१२)

कस्मिंश्चिद्वनोद्देशे खरनखरो नाम सिंहः प्रतिवसति स्म । स कदाचिदितश्चेतश्च परिभ्रमन्क्षुत्क्षामकण्ठो न किञ्चिदपि [6]सत्त्वमाससाद । ततश्चास्तमनसमये[7] महतीं गिरिगुहामासाद्य प्रविष्टश्चिन्तयामास—नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम् । तन्निभृतो भूत्वा तिष्ठामि । एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो नाम शृगालः समायातः ।

---

१. अतिप्रसन्न इति भावः ।
२. अश्रद्धेयं विश्वासानर्हं यद् व्याधस्य वचनं तस्य प्रत्ययमात्रेण विश्वासेनैव परिगृहीतेन धृतेन ।
३. पक्षिणा ।
४. दुर्भाग्यतया ।
५. वंशपरम्परागतः ।
६. प्राणिनम् ।
७. सायङ्काले ।

स च यावत् पश्यति, तावत्सिंहपदपद्धतिः[1] गुहायां प्रविष्टा न च निष्क्रमणं गता। ततश्चाचिन्तयत्-अहो! विनष्टोऽस्मि। नूनमस्यामन्तर्गतेन सिंहेन भाव्यम्। तत्किं करोमि। कथं ज्ञास्यामि। एवं विचिन्त्य द्वारस्थः [2]फूत्कर्तुमारब्धः—अहो बिल! अहो बिल! इत्युक्त्वा तूष्णीम्भूय भूयोऽपि तथैव प्रत्यभाषत—भोः! किं न स्मरसि यन्मया त्वया सह [3]समयः कृतोऽस्ति। यन्मया बाह्यात्समागतेन त्वं [4]वक्तव्यः। त्वया चाहमाकारणीयः[5] इति। तद्यदि मां नाह्वयसि ततोऽहं द्वितीयं बिलं यास्यामि। अथ तच्छ्रुत्वा सिंहश्चिन्तितवान्—नूनमेषा गुहास्य समागतस्य सदा समाह्वानं करोति परमद्य मद्भयान्न किञ्चिद् ब्रूते।

अथवा साध्विदमुच्यते—

> भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः।
> प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत्॥ १९२॥

तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति। एवं सम्प्रधार्य सिंहस्तस्याह्वानमकरोत्। अथ सिंहशब्देन सा गुहा [6]प्रतिरवसम्पूर्णा अन्यानपि दूरस्थानरण्यजीवांस्त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकमपठत्—

> अनागतं यः कुरुते स शोभते
> स शोच्यते यो न करोत्यनागतम्।
> वनेऽत्र संस्थस्य समागता जरा
> बिलस्य वाणी न कदापि मे श्रुता॥ १९३॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यमिति। एवमभिधायात्मानुयायिपरिवारानुगतो[7] दूरदेशान्तरं रक्ताक्षो जगाम।

अथ रक्ताक्षे गते स्थिरजीव्यतिहृष्टमना व्यचिन्तयत्—अहो! कल्याणमस्माकमुपस्थितं यद्रक्ताक्षो गतः। यतः स दीर्घदर्शी। एते च मूढमनसः। ततो मम [8]सुखघात्याः सञ्जाताः। उक्तं च यतः—

---

१. सिंहस्य चरणचिह्नम्। २. आह्वातुम्। ३. प्रतिज्ञा। ४. आलपितव्यः। ५. आह्वातव्यः। ६. प्रतिध्वनिपूर्णा। ७. स्वानुचरैः सहित इत्यर्थः। ८. सुखेन हन्तव्याः।

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः ।
क्रमायाता ध्रुवं तस्य न चिरात्स्यात्परिक्षयः ॥ १९४ ॥

अथवा साध्विदमुच्यते—

मन्त्रिरूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः ।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः ॥ १९५ ॥

एवं विचिन्त्य [1]स्वकुलाय एकैकां [2]वनकाष्ठिकां गुहादीपनार्थं दिने दिने प्रक्षिपति । न च ते मूर्खा उलूका विजानन्ति, यदेष कुलायमस्मद्दाहाय वृद्धिं नयति । अथवा साध्विदमुच्यते—

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
शुभं वेत्यशुभं पापं भद्रं दैवहतो नरः ॥ १९६ ॥

अथ [3]कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये सञ्जाते सूर्योदयेऽन्धतां प्राप्तेषूलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह—स्वामिन्! [4]दाहसाध्या कृता रिपुगुहा । तत्सपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाये प्रक्षिप येन सर्वे शत्रवः [5]कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते । तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह—तात! कथयात्मवृत्तान्तम् । चिराद्य दृष्टोऽसि । स आह—वत्स! नायं कथनस्य कालः । यतः कदाचित्तस्य रिपोः कश्चित् [6]प्रणिधिर्ममेहागमनं निवेदयिष्यति, तज्ज्ञानादन्धोऽन्यत्रापसरणं करिष्यति । तत्त्वर्यताम् उक्तञ्च—

शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः ।
तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम् ॥ १९७ ॥

तथा च—यस्य यस्य हि कार्यस्य फलितस्य विशेषतः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम् ॥ १९८ ॥

तद् गुहायामायातस्य ते हतशत्रोः सर्वं सविस्तारं [7]निर्व्याकुलतया कथयिष्यामि अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद् गुहाद्वारं प्राप्य स्थिरजीविकुलाये

---

१. निजनीडे । २. वन्यकाष्ठम् । ३. नीडवृद्धिच्छलेन । ४. दाहेन विजेतव्या ।
५. कुम्भीपाकाख्यनरकतुल्येन महता कष्टेनेति भावः । ६. गुप्तचरः ।
७. निर्भयतया ।

प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्य[1]आ-वृतत्वादनिःसरन्तो गुहामध्ये [2]कुम्भीपाकन्यायमापन्ना मृताश्च। एवं शत्रून्निशेषतां नीत्वा भूयोऽपि मेघवर्णस्तदेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्-तात! कथं त्वया शत्रुमध्ये गतेनैतावत्पर्यन्तं कालो नीतः। तदत्र कौतुकमस्माकं वर्तते। तत्कथ्यताम्। यतः—

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम्।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः॥ १९९॥

तदाकर्ण्य स्थिरजीव्याह—भद्र! आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तं च यतः—

उपनतभयैर्यो यो मार्गो हितार्थकरो भवेत्
स स निपुणया बुद्ध्या सेव्यो महान्कृपणोऽपि वा।
करिकरनिभौ ज्याघाताङ्कौ महार्थविशारदौ
रचितवलयैः स्त्रीवद्बद्धौ करौ हि किरीटिना॥ २००॥

शक्तेनापि सदा नरेन्द्रविदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वाक्यवज्रविषमे क्षुद्रेऽपि पापे जने।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन च।
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत्॥ २०१॥

यद्वा तद्वा विषमपतितः साधु वा गर्हितं वा।
कालापेक्षी हृदयनिहितं बुद्धिमान्कर्म कुर्यात्।
किं गाण्डीवस्फुरदुरुघनास्फालनक्रूरपाणि-
र्नासील्लीलानटनविलसन्मेखली सव्यसाची॥ २०२॥

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात्।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः!॥ २०३॥

रूपाभिजनसम्पन्नौ कुन्तीपुत्रौ बलान्वितौ।

---

१. काष्ठैरवरुद्धत्वात्। २. दह्यमाना इति भावः।

गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ ॥ २०४ ॥
रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना
कान्त्या श्रीरिव यात्र सापि विदशा कालक्रमादागता ।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाज्ञप्तया ।
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम् ?॥ २०५ ॥

मेघवर्ण आह—तात ! [1]असिधाराव्रतमिदं मन्ये, यदरिणा सह संवासः । सोऽब्रवीत्–देव ! एवमेतत् । परं न तादृङ् मूर्खसमागमः[2] क्वापि मया दृष्टः । न च महाप्रज्ञमनेकशास्त्रेष्वप्रतिमबुद्धिं रक्ताक्षं [3]विना [4]धीमान् । यत्कारणं तेन मदीयं यथास्थितं चित्तं ज्ञातम् । ये पुनरन्ये मन्त्रिणस्ते महामूर्खा [5]मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशलाः[6], यैरिदमपि न ज्ञातम् । यतः—

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः ।
अपसर्प्यः स धर्मत्वान्नित्योद्वेगी च दूषितः ॥ २०६ ॥
आसने शयने याने पानभोजनवस्तुषु ।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु ॥ २०७ ॥
तस्मात् सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः ।
आत्मानमादृतो रक्षेत्प्रमादाद्धि विनश्यति ॥ २०८ ॥

साधु चेदमुच्यते—

सन्तापयन्ति कमपथ्यभुजं न रोगाः
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परिपीडयन्ति ॥ २०९ ॥
लुब्धस्य नश्यति यशः पिशुनस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २१० ॥

---

१. असिधाराचलनव्रतसदृशं महदेव कठिनमित्यर्थः । २. मूर्खमण्डलम् ।
३. विहायेति भावः । ४. बुद्धिमान् आसीत् तत्रेति शेषः ।
५. मन्त्रिनामधारका इत्यर्थः । ६. नीतितत्त्वानभिज्ञाः ।

तद्राजन ! असिधाराव्रतं मया [1]आचरितमरिसंसर्गादिति यद्भवतोक्तं, तन्मया साक्षादेवानुभूतम् ।

उक्तं च—अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वार्थमभ्युद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ २११ ॥
स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान् ।
महता कृष्णसर्पेण मण्डूका बहवो हताः ॥ २१२ ॥

मेघवर्ण आह—कथमेतत् । स्थिरजीवी कथयति—

## कथा (१३)

अस्ति वरुणाद्रिसमीप एकस्मिन्प्रदेशे [2]परिणतवया मन्दविषो नाम कृष्णसर्पः । स एवं चित्ते सञ्चिन्तितवान्—कथं नाम मया [3]सुखोपायवृत्त्या वर्तितव्यम्[4] इति । ततो बहुमण्डूकं ह्रदमुपगम्य [5]धृतिपरीतमिवात्मानं दर्शितवान् । अथ तथा स्थिते तस्मिन्नुदकप्रान्तगतेनैकेन मण्डूकेन पृष्टः—[6]माम ! किमद्य यथापूर्वमाहारार्थं न विहरसि ?[7] । सोऽब्रवीत्–भद्र ! कुतो मे मन्दभाग्यस्याहाराभिलाषः । यत्कारणमद्य रात्रौ प्रदोष एव मयाहारार्थं विहरमाणेन दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया [8]क्रमः सज्जितः । सोऽपि मां दृष्ट्वा मृत्युभयेन [9]स्वाध्यायप्रसक्तानां ब्राह्मणानामन्तरमपक्रान्तः[10] न [11]विभावितो मया क्वापि गतः । [12]तत्सदृशमोहितचित्तेन मया कस्यचिद् ब्राह्मणस्य सूनोर्ह्रदतटजलान्तःस्थोऽङ्गुष्ठो दष्टः । ततोऽसौ सपदि पञ्चत्वमुपागतः । अथ तस्य पित्रा दुःखितेनाहं शप्तः । यथा—दुरात्मन् ! त्वया निरपराधो मत्सुतो दष्टः । तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि । तत्प्रसादलब्धजीविकया वर्तिष्यसे[13] इति । ततोऽहं युष्माकं वाहनार्थमागतोऽस्मि । तेन च सर्वमण्डूकानामिदमावेदितम्[14] । ततस्तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जल-

---

१. विहितम् । २. अतिवृद्धः । ३. अनायासलभ्यजीविकया । ४. जीवननिर्वाहः कर्त्तव्य इत्यर्थः । ५. अतिधैर्यशालिनमिव । ६. मातुल ! । ७. भ्रमसि । ८. प्रयासः कृतः । ९. वेदपाठसंलग्नानाम् । १०. मध्येन पलायितः । ११. ज्ञातः । १२. मण्डूकसमानभ्रान्तचित्तेन । १३. जीविष्यसि । १४. कथितम् ।

पादनाम्नो दर्दुरराजस्य विज्ञप्तम् । अथासावपि मन्त्रिपरिवृतोऽत्यद्भुत-मिदमिति मन्यमानः ससंभ्रमं ह्रदादुत्तीर्य मन्दविषस्य फणिनः फणा-प्रदेशमधिरूढः । शेषा अपि [1]यथाज्येष्ठं तत्पृष्ठोपरि समारुरुहुः । किं बहुना । तदुपरि स्थानमप्राप्तवन्तस्तस्यानुपदं[2] धावन्ति । मन्दविषोऽपि तेषां तुष्ट्यर्थमनेकप्रकारान् गतिविशेषानदर्शयत् । अथ जलपादो लब्ध-तदङ्गसंस्पर्शसुखस्तमाह—

न तथा करिणा य.  गेण रथेन वा ।
नरयानेन वा यानं यथा मन्दविषेण मे ॥ २१३ ॥

अथान्येद्युर्मन्दविषश्छद्मना मन्दं मन्दं [3]विसर्पति । तच्च दृष्ट्वा जल-पादोऽब्रवीत्—भद्र ! मन्दविष ! यथापूर्वं किमद्य साधु नोह्यते । मन्द-विषोऽब्रवीत्—देव ! [4]अद्याहारवैकल्यान्न मे वोढुं शक्तिरस्ति । अथा-सावब्रवीत्–भद्र । भक्षय क्षुद्रमण्डूकान् । तच्छ्रुत्वा प्रहर्षितसर्वगात्रो मन्द विषः ससंभ्रममब्रवीत्—ममायमेव विप्रशापोऽस्ति । तत्तवानेनानुज्ञावच-नेनप्रीतोऽस्मि । ततोऽसौ नैरन्तर्येण मण्डूकान्भक्षयन्कतिपयैरेवाहोभिर्ब-लवान्संवृत्तः । प्रहृष्टश्चान्तर्लीनमवहस्येदमब्रवीत्—

मण्डूका विविधा ह्येते छलपूर्वोपसाधिताः ।
कियन्तं कालमक्षीणा भवेयुः खादिता मम ॥ २१४ ॥

जलपादोऽपि मन्दविषेण [5]कृतकवचनव्यामोहितचित्तः किमपि नावबुध्यते । अत्रान्तरेऽन्यो महाकायः कृष्णसर्पस्तमुद्देशं समायातः । तं च मण्डूकैर्वाह्यमानं दृष्ट्वा विस्मयमगमत्, आह च–वयस्य ! यदस्मा-कमशनं[6] तैः कथं वाह्यसे[7] विरुद्धमेतत्[8] ।

अथ मन्दविषोऽन्तर्लीनमवहस्य पुनरपि "मण्डूका विविधा ह्येते" इति तमेवमब्रवीत् । अथ जलपादस्तच्छ्रुत्वा सुतरां [9]व्यग्रहृदयः 'किमनेना-भिहितम्' इति सम्यङ्नावगम्य[10] तमपृच्छत्—भद्र ! किं त्वयाभिहित-मिदं विरुद्धं वचः ? । अथासावाकारप्रच्छादनार्थं[11] 'न किञ्चित्' इत्य-

१. प्रधानानुसारेण । २. पश्चात् ३. गच्छति ।
४. भोजनाभावात् । ५. कपटवचनैर्विमुग्धचित्तः ।
६. भोजनम् ७. वाहनीक्रियसे । ८. अनुचितमित्यर्थः ।
९. व्याकुलचित्तः । १०. अज्ञात्वा । ११. मनोभावस्य गोपनार्थम् ।

ब्रवीत्। तथैव कृतकवचनव्यामोहितचित्तो जलपादस्तस्य [1]दुष्टाभिसंधिं नावबुध्यते। किं बहुना तथा तेन सर्वेऽपि भक्षिता यथा [2]बीजमात्रमपि नावशिष्टम्। अतोऽहं ब्रवीमि—'स्कन्धेनापि वहेच्छत्रुम्' इति। अथ राजन्! यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः, तथा मयापि सर्वेऽपि वैरिण इति। साधु चेदमुच्यते—

वने प्रज्वलितो वह्निर्दहन्मूलानि रक्षति।
समूलोन्मूलनं कुर्याद्वायुर्यो मृदुशीतलः॥ २१५॥

मेघवर्ण आह—तात! सत्यमेवैतत् ये महात्मानो भवन्ति ते [3]महासत्त्वा आपद्गता अपि प्रारब्धं न विसर्जयन्ति। उक्तं च यतः—

महत्त्वमेतन्महतां नयालङ्कारधारिणाम्।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये॥ २१६॥

तथा च—प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति॥ २१७॥

तत्कृतं निष्कण्टकं मम राज्यं शत्रून्निशेषतां नयता त्वया। अथवा युक्तमेतन्नयवेदिनाम्[4]। उक्तं च यतः—

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च।
व्याधिशेषं च निःशेषं कृत्वा प्राज्ञो न सीदति॥ २१८॥

सोऽब्रवीत्—देव! भाग्यवांस्त्वमेवासि, यस्यारब्धं सर्वमेव संसिध्यति[5]। तन्न केवलं शौर्यं कृत्यं साधयति, किंतु प्रज्ञया यत्क्रियते तदेव विजयाय भवति। उक्तं च यतः—

शस्त्रैर्हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हन्ति॥ २१९॥

तदेवं [6]प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः सम्भ-

---

१. दुर्विचारम्। २. कुलप्रचालक एकोऽपि मण्डूक इत्यर्थः। ३. अतिधीराः। ४. नीतिविदाम्। ५. सिद्धिप्रदं भवतीत्यर्थः। ६. बुद्धिपुरुषार्थाभ्याम्।

वन्ति । उक्तं च—

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः
स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥२२०॥

तथा च नयत्यागशौर्यसंपन्ने पुरुषे राज्यमिति । उक्तं च—

त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥ २२१ ॥

मेघवर्ण आह—नूनं [1]सद्यः फलानि नीतिशास्त्राणि, यत्त्वयानुकृत्येन[2] अनुप्रविश्य[3] अरिमर्दनः सपरिजनो निःशेषितः[4] ।

स्थिरजीव्याह—

तीक्ष्णोपायप्राप्तिगस्योऽपि योऽर्थस्तस्याप्यादौ संश्रयः साधुयुक्तः ।
उत्तुङ्गाग्रः सारभूतो वनानां नाऽनभ्यर्च्य च्छिद्यते पादपेन्द्रः ॥ २२२ ॥

अथवा स्वामिन् ! किं तेनाभिहितेन यदनन्तरकाले क्रियारहितमसुखसाध्यं वा भवति । साधु चेदमुच्यते—

अनिश्चितैरध्यवसायभीरुभिः पदे पदे दोषशतानुदर्शिभिः ।
फलैर्विसंवादमुपागता गिरः प्रयान्ति लोके परिहासवस्तुताम् ॥२२३॥

न च लघुष्वपि कर्तव्येषु धीमद्भिरनादरः[5] कार्यः । यतः—

शक्ष्यामि कर्तुमिदमल्पमयत्नसाध्यमत्रादरः क इति कृत्यमुपेक्षमाणाः ।
केचित्प्रमत्तमनसः परितापदुःखमापत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥२२४॥

तदद्य जितारेः[6] मद्विभोर्यथापूर्वं [7]निद्रालाभो भविष्यति ।

उच्यते चैतम्—

निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखम् ।
सदा दृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ २२५ ॥

तथा च—विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषां
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् ।

---

१. शीघ्रसिद्धिप्रदानि । २. मतानुसारिणा ।
३. स्नेहास्पदीभूत्वेत्यर्थः । ४. विनाशितः । ५. उपेक्षा
६. मम स्वामिनः । ७. निश्चिन्ततालाभः ।

मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः ।
सामर्षे हृदयेऽवकाशविषया तावत्कथं निर्वृतिः ॥ २२६ ॥

तदवसितकार्यारम्भस्य[1] विश्राम्यतीव मे हृदयम् । तदिदमधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेणाचलच्छत्रासनश्रीश्चिरं भुङ्क्ष्व । अपि च—

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥ २२७ ॥

गुणेषु रागो व्यसनेष्वनादरो रतिः सुभृत्येषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां सितातपत्राभरणां नृपश्रियम् ॥२२८॥

न च त्वया प्राप्तराज्योऽहमिति मत्वा [2]श्रीमदेनात्मा व्यंसयितव्यः[3] यत्कारणं चला हि राज्ञो विभूतयः, [4]वंशारोहणवद्राज्यलक्ष्मीर्दुरारोहा, [5]क्षणविनिपातरता प्रयत्नशतैरपि धार्यमाणा दुर्धरा, [6]प्रशस्ताराधिताप्यन्ते [7]विप्रलम्भिनी, वानरजातिरिव [8]विद्रुतानेकचित्ता, पद्मपत्रोदकमिवाघटितसंश्लेषा[9] पवनगतिरिवातिचपला, [10]अनार्यसंगतमिवास्थिरा, [11]आशीविष इव [12]दुरुपचारा, [13]संध्याभ्रलेखेव मुहूर्तरागा, जलबुद्बुदावलीव स्वभावभङ्गुरा, [14]सीरप्रकृतिरिव [15]कृतघ्ना, स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा । अपि च—

यदैव राज्ये क्रियतेऽभिषेकस्तदैव बुद्धिर्व्यसनेषु योज्या ।
घटा हि राज्ञामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥२२९॥

---

१. समासारब्धकार्यस्य । २. राज्याहङ्कारेण ।
३. वञ्चयितव्यः । ४. वंशे यथा दुष्करमारोहणम् ।
५. क्षणभङ्गुरेत्यर्थः । ६. योग्यैः सेविता अपि । ७. प्रवञ्चनशीला
८. विद्रुतानि चञ्चलीकृतानि अनेकेषां चित्तानि यया सा ।
९. अकृतसम्बन्धा । १०. दुर्जनमैत्रीव । ११. सर्प इव ।
१२. दुःखेन सेवनीया ।
१३. संध्यायां सायङ्काले जायमाना या अभ्रलेखा मेघपंक्तिः सा इव मुहूर्तं क्षणं रागोऽनुरागः पक्षे लौहित्यञ्च यस्याः सा ।
१४. सीरस्य हलस्य प्रकृतिरिव स्वभाव इव ।
१५. उपकारविस्मरणशीला अन्यत्र कृष्टस्य क्षेत्रस्य पुनः कर्षणकारिणी ।

न च कश्चिदनधिगमनीयो[1] नामास्त्यापदाम् । उक्तं च—

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
नाट्याचार्यकमर्जुनस्य पतनं सञ्चिन्त्य लङ्केश्वरे
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥ २३० ॥

क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृद्गतः
क्व स जलनिधेर्वेलां बध्वा नृपः सगरस्तथा ।
क्व स करतलाज्जातो वैन्यः क्व सूर्यतनुर्मनु-
र्ननु बलवता कालेनैते प्रबोध्य निमीलिताः ॥ २३१ ॥

मान्धाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रतो
देवानां नृपतिर्गतः क्व नहुषः सच्छास्त्रवान्केशवः ।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः
कालेनैव महात्मना त्वनुकृताः कालेन निर्वासिताः ॥ २३२ ॥

अपि च—स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि ।
स च ते च ताश्च तानि कृतान्तदृष्टानि नष्टानि ॥ २३३ ॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीमवाप्य [2]न्यायैकनिष्ठो भूत्वोपभुङ्क्ष्व ॥

इति विष्णुशर्मविरचिते पञ्चतन्त्रके काकोलूकीयं नाम तृतीयं तन्त्रं समाप्तम् ।

---

## लब्धप्रणाशम्[3]

अथेदमारभ्यते लब्धप्रणाशं नाम चतुर्थं तन्त्रम् । यस्यायमादिमः श्लोकः—समुत्पन्नेषु कार्येषु बुद्धिर्यस्य न हीयते ।
स एव दुर्गं तरति जलस्थो वानरो यथा ॥ १ ॥

तद्यथानुश्रूयते—अस्ति कस्मिंश्चित्समुद्रोपकण्ठे महाञ्जम्बूपादपः [4]सदाफलः । तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म । तत्र च

---

१. अगम्य इत्यर्थः । २. न्यायपरायणः ।
३. लब्धस्य प्राप्तस्य प्रणाशो विनाशो यत्र तल्लब्धप्रणाशम् ।
४. सर्वदा फलवानित्यर्थः

तस्य तरोरधः कदाचित्करालमुखो[1] नाम मकरः समुद्रसलिलान्निष्क्रम्य [2]सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत[3]। ततश्च रक्तमुखेन स प्रोक्तः—भो! भवान्समभ्यागतोऽतिथिः। तद्भक्षयतु मया दत्तान्यमृततुल्यानि[4] जम्बूफलानि। उक्तं च—

प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः।
वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसंक्रमः॥ २॥

न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत्॥ ३॥

दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम्।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम्॥ ४॥

अपूजितोऽतिथिर्यस्य गृहाद्याति विनिश्वसन्।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः॥ ५॥

एवमुक्त्वा तस्मै जम्बूफलानि ददौ। सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि स्वभवनमगात्। एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ [5]विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति। अथान्यतमे दिवसे तया स पृष्टः—नाथ! क्वैवंविधान्यमृतफलानि प्राप्नोषि? स आह—भद्रे! ममास्ति परमसुहृद्रक्तमुखो नाम वानरः। स प्रीतिपूर्वमिमानि फलानि प्रयच्छति। अथ तयाभिहितम्—यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति तस्य हृदयममृतमयं[6] भविष्यति। तद्यदि मया भार्यया ते प्रयोजनम्, ततस्तस्य हृदयं मह्यं प्रयच्छ। येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान्भुनज्मि। स आह—भद्रे! मा मैवं वद। यतः स [7]प्रतिपन्नोऽस्माकं भ्राता। अपरं फलदाता। ततो व्यापादयितुं न शक्यते। तत्त्यजैनं [8]मिथ्याग्रहम्। उक्तं च—

---

१. भीषणवदनः। २. अतिमृदुवालुकायुक्ते। ३. उपविष्टः ४. अतिमधुराणीत्यर्थः। ५. विविधानां शास्त्राणां वेदादीनां विचारेणेत्यर्थः। ६. अमृतपूर्णम्। ७. स्वीकृतः। ८. अनुचिताग्रहम्।

एकं प्रसूयते माता द्वितीयं वाक्प्रसूयते ।
वाग्जातमधिकं प्रोचुः सोदर्यादपि बन्धुवत् ॥ ६ ॥

अथ मकर्याह त्वया कदाचिदपि मम वचनं नान्यथा कृतम् । तन्नूनं सा वानरी भविष्यति, यतस्तया अनुरागतः सकलमपि दिनं तत्र गमयसि[1] तत्त्वं ज्ञातो मया सम्यक् ।

अपरं सा यदि तव वल्लभा न भवति, तत्किं मया [2]भणितेऽपि तां न व्यापदयसि । अथ यदि स वानरस्तत् कस्तेन सह तव स्नेहः । तत्किं बहुना । यदि तस्य हृदयं न भक्षयामि, तन्मया [3]प्रायोपवेशनं कृतं विद्धि । एवं तस्यास्तं निश्चयं ज्ञात्वा चिन्ताव्याकुलहृदयः[4] स प्रोवाच अथवा साध्विदमुच्यते—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ ७ ॥

तत्किं करोमि । कथं स मे वध्यो भवति । इति विचिन्त्य वानरपार्श्वमगमत् । वानरोऽपि चिरादायान्तं तं सोद्वेगमवलोक्य प्रोवाच—भो ! मित्र ! किमद्य [5]चिरवेलायां समायातोऽसि । कस्मात्साह्लादं नालपसि । न सुभाषितानि पठसि । स आह—मित्र ! अहं तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः—भाः ! कृतघ्न ! मा मे त्वं स्वमुखं दर्शय, यतस्त्वं प्रतिदिनं मित्रमुपजीवसि न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि करोषि । तत्ते प्रायश्चित्तमपि नास्ति ।

उक्तं च— ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ८ ॥

तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय । [6]नो चेत्त्वया सह मे परलोके दर्शनमिति । तदहं तयैवं प्रोक्तस्तव सकाशमागतः । तदद्य तया सह त्वदर्थे [7]कलहायतो ममेयती[8] वेला विलग्ना[9] । तदागच्छ

---

१. व्यतीतं करोषि
२. उक्तेऽपि
३. अनशनरूपं व्रतम् , आहारमकृत्वा मरिष्यामीति यावत् ।
४. खिन्नचित्तः ।
५. बहुदिनानन्तरमित्यर्थः ।
६. अहं मरिष्यामीति भावः ।
७. कलहं विदधतः
८. एतावान् समयः ।
९. व्यतीतेति भावः ।

मे गृहम्। तव भ्रातृपत्नी [1]रचितचतुष्का [2]प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति। मर्कट आह—भो! मित्र! युक्तमभिहितं मद्भ्रातृपत्न्या। उक्तं च—

वर्जयेत्कौलिकाकारं मित्रं प्राज्ञतरो नरः।
आत्मनः संमुखं नित्यं य आकर्षति लोलुपः॥ ९॥

तथा च—ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षडविधं प्रीतिलक्षणम्॥ १०॥

परं वयं वनचराः, युष्मदीयं च [3]जलान्ते गृहम्। तत्कथं शक्यते तत्र गन्तुम्। तस्मात्तामपि मे भ्रातृपत्नीमत्रानय येन प्रणम्य तस्या आशीर्वादं गृह्णामि। स आह—भो! मित्र! अस्ति समुद्रान्तरे[4] सुरम्ये [5]पुलिनप्रदेशेऽस्मद्गृहम्। तन्मम पृष्ठमारूढः सुखेनाकृतभयो[6] गच्छ। सोऽपि तच्छ्रुत्वा सानन्दमाह—भद्र! यद्येवं तत्किं विलम्ब्यते। त्वर्यताम्। एषोऽहं तव पृष्ठमारूढः। तथानुष्ठितेऽगाधे जलधौ गच्छन्तं मकरमालोक्य भयत्रस्तमना वानरः प्रोवाच—भ्रातः! शनैः शनैर्गम्यताम्। [7]जलकल्लोलैः [8]प्लाव्यते मे शरीरम्। तदाकर्ण्य मकरश्चिन्तयामास—असावगाधं जलं प्राप्तो मे वशः सञ्जातः। मत्पृष्ठगतस्तिलमात्रमपि चलितुं न शक्नोति। तस्मात्कथयाम्यस्य निजाभिप्रायम्, येनाभीष्टदेवतास्मरणं करोति। आह च—मित्र! त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य तत्स्मर्यतामभीष्टदेवता। स आह—भ्रातः! किं मया तस्यास्तवापि चापकृतं येन मे वधोपायश्चिन्तितः?। मकर आह भोः! तस्यास्तावत्तव हृदयस्यामृतमयफलरसास्वादनमृष्टस्य[9] भक्षणे [10]दोहदः सञ्जातः।

---

१. रचितं निर्मितं तवोपवेशनार्थं चतुष्कं चत्वरं मण्डपं चतुःस्तम्भमयं वा यया सा।
२. प्रगुणितानि बहुमूल्यानि वस्त्रमणिमाणिक्यादीनि उचितानि उपयुक्तानि आभरणानि यस्याः सा बहुमूल्यैरलङ्कारैरलंकृतेत्यर्थः।
३. जलमध्ये। ४. सागराभ्यन्तरे।
५. जलनिर्गतभूभागे। ६. गतभयः ७. सलिलोर्मिभिः।
८. आर्द्रीक्रियते।
९. अमृतमयानां सुमधुराणां फलानां रसास्वादनेन मृष्टस्य अमृतपूर्णस्य इति भावः। १. प्रबलेच्छा।

तेनैतदनुष्ठितम्, प्रत्युत्पन्नमतिर्वानर आह—भद्र ! यद्येवं तत्किं त्वया मम तत्रैव न व्याहृतम् । येन स्वहृदयं [1]जम्बूकोटरे सदैव मया [2]सुगुप्तं कृतम्, तद्भ्रातृपत्न्या अर्पयामि । त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः ? । तदाकर्ण्य मकरः सानन्दमाह—भद्र ! यद्येवं तदार्पय मे हृदयम् । येन सा दुष्टपत्नी तद्भक्षयित्वानशनादुत्तिष्ठति । अहं त्वां तमेव जम्बूपादपं प्रापयामि । एवमुक्त्वा निवर्त्य जम्बूतलमगात् वानरोऽपि कथमपि [3]जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान् । ततश्च [4]दीर्घतर-चङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास—अहो ! लब्धास्ता-वत्प्राणाः । अथवा साध्विदमुच्यते—

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ११ ॥

तन्ममैतदद्य पुनर्जन्मदिनमिव सञ्जातम् । इति चिन्तयमानं मकर आह—भो ! मित्र ! अर्पय तद्हृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशना-दुत्तिष्ठति । अथ विहस्य [5]निर्भर्त्सयन्वानरस्तमाह—धिग्धिङ्मूर्ख ! विश्वासघातक ! किं कस्यचिद् हृदयद्वयं भवति ! तदाशुगम्यतां जम्बूवृक्ष-स्याधस्तान्न भूयोऽपि त्वयात्रागन्तव्यम् । उक्तं च यतः—

सकृद्दुष्टं च यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १२ ॥

तच्छ्रुत्वा मकरः सविलक्षं चिन्तितवान्—अहो ! मयातिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः, तद्यद्यसौ पुनरपि कथञ्चिद्विश्वासं गच्छति, तद्भूयोऽपि विश्वासयामि । आह च—मित्र ! हास्येन मया तेऽभिप्रायो लब्धः । तस्या न किंचित्तव हृदयेन प्रयोजनम् । तदागच्छ [6]प्राघुणिकन्यायेनास्मद्गृहम् । तव भ्रातृपत्नी सोत्कण्ठा वर्तते । वानर आह—भो ! दुष्ट ! गम्यताम् अधुना नाहमागमिष्यामि । उक्तं च—

---

१. जम्बूवृक्षविवरे  २. सुगोप्य स्थापितम् ।
३. जल्पिता = यदि द प्राणसङ्कटादस्मादहं कथमप्युत्तीर्णो भवेयं तदा युष्मान् पूजयेयमित्येवं सङ्कल्पिता विविधानाम् उपचारसहिता पूजा येन सः ।
४. वेगेनोत्प्लुत्येति भावः ।  ५. तरस्कुर्वन् ।  ६. अतिथिरूपेण ।

बुभुक्षितः किं न करोति पापं क्षीणा जना निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य न गङ्गदत्तः पुनरेति कूपम् ॥ १३ ॥

मकर आह—कथमेतत् ।? आह—

## कथा (१)

कस्मिंश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म स कदाचिद् दायादैः[1] उद्वेजितः [2]अरघट्टघटीमारुह्य निष्क्रान्तः। अथ तेन चिन्तितम्— यत्कथं तेषां दायादानां मया [3]प्रत्युपकारः कर्तव्यः ।

उक्तञ्च—आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥ १४ ॥

एवं चिन्तयन्बिले प्रविशन्तं कृष्णसर्पमपश्यत् । तं दृष्ट्वा भूयोऽप्यचिन्तयत्—यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदम्[4] करोमि ।

उक्तं च—शत्रुभिर्योजयेच्छत्रुं बलिना बलवत्तरम् ।
स्वकार्याय यतो न स्यात्काचित्पीडात्र तत्क्षये ॥ १५ ॥

तथा च—शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ॥ १६ ॥

एवं स [5]विभाव्य बिलद्वारं गत्वा तमाहूतवान्—एह्येहि प्रियदर्शन ! एहि । तच्छ्रुत्वा । सर्पश्चिन्तयामास—य एष मामाह्वयति स स्वजातीयो न भवति । यतो नैषा सर्पवाणी । अन्येन केनापि सह मम मर्त्यलोके [6]संधानं नास्ति । तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोऽयं भविष्यति ।

उक्तं च—यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥ १७ ॥

कदाचित्कोऽपि मन्त्रवाद्यौषधचतुरो वा मामाहूय बन्धने क्षिपति । अथवा कश्चित्पुरुषो वैरमाश्रित्य, कस्यचिद्भक्षणार्थे मामाह्वयति । आह च भोः ! को भवान् ? । स आह-अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे

---

१. सजातीयैः बन्धुभिरिति यावत् ।
२. कूपाज्जलनिःसारणार्थं दारुरचितयन्त्रविशेषः तत्रस्थलघुघटम् ।
३. अनिष्टम् । ४. विनाशम् । ५. विचार्य । ६. परिचय इत्यर्थः ।

[1]मैत्र्यर्थमभ्यागतः। तच्छ्रुत्वा सर्प आह भोः! [2]अश्रद्धेयमेतत्, यत्तृणानां वह्निना सह सङ्गमः। उक्तं च—

यो यस्य जायते वध्यः स स्वप्नेऽपि कथञ्चन।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि॥ १८॥

गङ्गदत्त आह—भोः! सत्यमेतत्। [3]स्वभाववैरी त्वमस्माकं—परं [4]परपरिभवात्प्राप्तोऽहं ते सकाशम्। उक्तञ्च—

सर्वनाशे च सञ्जाते प्राणानामपि संशये।
अतिशत्रुं प्रणम्यापि रक्षेत्प्राणान्धनानि च॥ १९॥

सर्प आह—कथय कस्मात्ते परिभवः? स आह—'दायादेभ्यः।' सोऽप्याह—क्व ते [5]आश्रयो वाप्यां कूपे तडागे ह्रदे वा। तत्कथय स्वाश्रयम्। तेनोक्तम्—[6]पाषाणचयनिबद्धे कूपे। सर्प आह—अहो! [7]अपदा वयम्। तन्नास्ति तत्र मे [8]प्रवेशः। प्रविष्टस्य च स्थानं नास्ति। यत्र स्थितस्तव दायादान्व्यापादयामि। तद्गम्यताम्।

उक्तञ्च—यच्छक्यं ग्रसितुं यस्य ग्रस्तं परिणमेच्च यत्।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता॥ २०॥

गङ्गदत्त आह—भोः! समागच्छ त्वम्। अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति। तत्र स्थितस्त्वं [9]लीलया दायादान्व्यापादयिष्यसि। तच्छ्रुत्वा सर्पो व्यचिन्तयत्—अहं तावत्परिणतवयाः[10] कदाचित्कथञ्चिन्मूषकमेकं प्राप्नोमि। तत्सुखावहो जीवनोपायोऽयमनेन [11]कुलाङ्गारेण मे दर्शितः। तद्गत्वा तान्मण्डूकान्भक्षयामि' इति। अथवा साध्विदमुच्यते—

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः।
स हि सर्वसुखोपायां वृत्तिमारचयेद् बुधः॥ २१॥

---

१. सख्यं कर्तुम्। २. अविश्वसनीयमिति यावत्। ३. जन्मवैरीत्यर्थः। ४. अन्यकृतादपमानाद्धेतोरित्यर्थः। ५. वासस्थानं बिलमित्यर्थः। ६. पाषाणानां चयः समुदायः तेन निबद्धे विरचिते। ७. चरणरहिता गन्तुमशक्ता इति भावः। ८. गमनमित्यर्थः। ९. प्रयास विनैव सुखेनेति भावः। १०. अत्यन्तं वृद्धः। ११. वंशविनाशकेन।

एवं विचिन्त्य तमाह—भो ! गङ्गदत्त ! यद्येवं तदग्रे भव । येन तत्र गच्छावः । गङ्गदत्त आह—भोः प्रियदर्शन ! अहं त्वां सुखोपायेन तत्र नेष्यामि, स्थानं च दर्शयिष्यामि । परं त्वयास्मत्परिजनो रक्षणीयः । केवलं यानहं तव दर्शयिष्यामि त एव भक्षणीयाः' इति । सर्प आह—सांप्रतं त्वं मे मित्रं जातम् । तन्न भेतव्यम् । तव वचनेन भक्षणीयास्ते दायादाः । एवमुक्त्वा विलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः । अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं[1] नीतः । ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः । ते च तेन शनैः शनैर्भक्षिताः । अथ मण्डूकाभावे सर्पेणाभिहितम्—भद्र ! [2]निःशेषितास्ते रिपवः । तत्प्रयच्छान्यन्मे किञ्चिद्भोजनम् । यतोऽहं त्वयात्रानीतः गङ्गदत्त आह—भद्र ! कृतं त्वया मित्रकृत्यम्[3] । तत्सांप्रतमनेनैव घटिकायन्त्रमार्गेण गम्यताम्' इति । सर्प आह—भो ! गङ्गदत्त ! न सम्यगभिहितं त्वया । कथमहं तत्र गच्छामि । मदीयबिलदुर्गमन्येन [4]रुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ । नो चेत्सर्वानपि भक्षयिष्यामि' इति । तच्छ्रुत्वा गङ्गदत्तो व्यचिन्तयत्—अहो ! [5]किमेतन्मया कृतं सर्पमानयता । तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति । अथवा युक्तमुच्यते—

योऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः ।
स करोति न संदेहः स्वयं हि विषभक्षणम् ॥ २२ ॥

तत्प्रयच्छाम्यस्यैकैकं प्रतिदिनं सुहृदम् । उक्तं च—

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः ।
तोषयन्त्यल्पदानेन वाडवं सागरो यथा ॥ २३ ॥

तथा च—

यो दुर्बलोऽणूनपि याच्यमानो वलीयसा यच्छति नैव साम्ना ।
प्रयच्छते नैव च दर्श्यमानं खारीं स चूर्णस्य पुनर्ददाति ॥ २४ ॥

तथा च—सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः ।
अर्द्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः ॥ २५ ॥

---

१. निजवासस्थानम् । २. विनाशिता इत्यर्थः । ३. उपकारः । ४. अधिकृतमिति यावत् । ५. न युक्तं विहितमित्यर्थः ।

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः ।
एतदेव हि पाण्डित्यं यत्स्वल्पाद् भूरिरक्षणम् ॥ २६ ॥

एवं निश्चित्य नित्यमेकैकमादिशति[1] । सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति । अथवा साध्विदमुच्यते—

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति ॥ २७ ॥

अथान्यदिने तेनापरान्मण्डूकान्भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः। तं भक्षितं मत्वा गङ्गदत्तस्तारस्वरेण[2] धिग्धिग् इतिप्रलापपरः[3] कथंचिदपि न विरराम। ततः स्वपत्न्याभिहितः—

किं क्रन्दसि दुराक्रन्द ! स्वपक्षक्षयकारक !।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ।। २८ ॥

तदद्यापि विचिन्त्यतामात्मनो [4]निष्क्रमणम्, अस्य वधोपायं च। अथ गच्छता कालेन सकलमपि [5]कवलितं मण्डूककुलम्। केवलमेको गङ्गदत्तस्तिष्ठति। ततः प्रियदर्शनेन भणितम्—भो ! गङ्गदत्त ! बुभुक्षितोऽहम्। निःशेषिताः सर्वे मण्डूकाः। तद्दीयतां मे किञ्चिद्भोजनं यतोऽहं त्वया आनीतः। स आह—भो ! मित्र ! न त्वयात्र विषये मयावस्थितेन कापि चिन्ता कार्या। तद्यदि मां प्रेषयसि ततोऽन्यकूपस्थानपि मण्डूकान्विश्वास्यात्रानयामि। स आह—मम तावत्त्वमभक्ष्यो भ्रातृस्थाने[6]। तद्येवं करोषि तत्सांप्रतम् पितृस्थाने[7] भवसि। तदेवं क्रियताम्’इति। सोऽपि तदाकर्ण्यारघट्टघटिकामाश्रित्य [8]विविधदेवतोपकल्पितपूजोपयाचितस्तस्मात्कूपाद्विनिष्क्रान्तः। प्रियदर्शनोऽपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति। अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच—भद्रे ! क्रियतां स्तोकं साहाय्यम्। यतश्चिरपरिचितस्ते गङ्ग-

---

१. भक्षयितुं तस्मै ददातीत्यर्थः। २. उच्चैरित्यर्थः। ३. विलपन्निति भावः। ४. निर्गमनोपायम्। ५. भक्षितम्। ६. भ्रातृवन्मान्य इत्यर्थः। ७. पितृतुल्योऽसीत्यर्थः। ८. विविधाभ्योऽनेकाभ्यो बहुभ्य इति यावत् देवताभ्य उपकल्पिता सङ्कल्पिता या पूजा तथा स्वकल्याणार्थम् उपयाचितं सर्पात्परित्राणं प्रार्थितं येन स प्रार्थितविविधदेव इति भावः।

दत्तः । तद्गत्वा तत्सकाशं कुत्रचिज्जलाशयेऽन्विष्य मम सन्देशं कथय। येनागम्यतामेकाकिनापि भवता द्रुततरं यद्यन्ये मण्डूका नागच्छन्ति। अहं त्वया विना नात्र वस्तुं शक्नोमि । तथा यद्यहं तव विरुद्धमाचरामि[1] तत्सुकृतमन्तरे मया विधृतम्। गोधापि तद्वचनाद् गङ्गदत्तं द्रुततरमन्विष्याह—भद्र! गङ्गदत्त! स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति। तच्छीघ्रमागम्यतामिति। अपरञ्च तेन तव विरुद्धकरणे[2] सुकृतमन्तरे धृतम् । तन्निःशङ्केन मनसा समागम्यताम् । तदाकर्ण्य गङ्गदत्त आह—

बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे! प्रियदर्शनस्य न गङ्गदत्तः पुनरेति कूपम् ॥ २९ ॥

एवमुक्त्वा स तां विसर्जयामास। तद्भो! दुष्टजलचर! अहमपि गङ्गदत्त इव त्वद्गृहे न कथञ्चिदपि यास्यामि। तच्छ्रुत्वा मकर आह—भो! मित्र! नैतद्युज्यते। सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन। अथवात्राहमनशनात्प्राणत्यागं तवोपरि करिष्यामि। वानर आह—मूढ! किमहं मूर्खः। कथं [3]दृष्टापायोऽपि स्वयमेव तत्र गत्वात्मानं व्यापादयामि।

तन्मूर्ख! कपटं कृतं त्वया। परं युधिष्ठिरेणेव सत्यवचनेन विनाशितम्। अथवा साध्विदमुच्यते—

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः।
स स्वार्थाद् भ्रश्यते नूनं युधिष्ठिर इवापरः॥ ३० ॥

मकर आह—कथमेतत्। स आह—

## कथा (२)

कस्मिंश्चिदधिष्ठाने कुम्भकारः प्रतिवसति स्म। स कदाचित् [4]प्रमादादर्धभग्नघटखर्परतीक्ष्णाग्रस्योपरि महता वेगेन धावन्पतितः। ततः

---

१. अनिष्टं करोमीत्यर्थः । २. अनिष्टकरणे । ३. सम्भावितात्मविनाशोऽपीति भावः ।

४. प्रमादात् अनवधानात्, अर्धभग्नो यो घटस्तस्य यत् खर्परं खण्डं तत्तीक्ष्णाग्रस्य निशिताग्रभागस्य ।

[1]खर्परकोट्या पाटितललाटः [2]रुधिरप्लावितततनुः कृच्छ्रादुत्थाय स्वाश्रय गतः। ततश्चापथ्यसेवनात्स प्रहारस्तस्य [3]करालतां गतः कृच्छ्रेण च नीरोगतां नीतः। अथ कदाचिद् दुर्भिक्षपीडिते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चिद्राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव। सोऽपि राजा तस्य ललाटे विकरालं प्रहारक्षतं दृष्ट्वा चिन्तयामास—यद्वीरः पुरुषः कश्चिदयं नूनम्। तेन ललाटपट्टे सम्मुखप्रहारः। अतस्तं सम्मानादिभिः सर्वेषां राजपुत्राणां मध्ये विशेषप्रसादेन पश्यति स्म। तेऽपि राजपुत्राः तस्य तं [4]प्रसादातिरेकं पश्यन्तः परमीर्ष्याधर्म वहन्तो राजभयान्न किञ्चिदूचुः। अथान्यस्मिन्नहनि तस्य भूपतेर्वीरसम्भावनायाम [5]क्रियमाणायाम्, [6]विग्रहे समुपस्थिते, [7]प्रकल्प्यमानेषु गजेषु, [8]संनह्यमानेषु वाजिषु, योधेषु [9]प्रगुणीक्रियमाणेषु, तेन भूभूजा स कुम्भकारः [10]प्रस्तावानुगतं पृष्टो निर्जने—भो! राजपुत्र! किं ते नाम का च जातिः? कस्मिन्संग्रामे प्रहारोऽयं ते ललाटे लग्नः। स आह—देव! नायं शस्त्रप्रहारः! युधिष्ठिराभिधः कुलालोऽहं. प्रकृत्या[11] मद्गेहेऽनेकखर्पराण्यासन्। अथ कदाचिन्मद्यपानं कृत्वा निर्गतः [12]प्रधावन् खर्परोपरि पतितः। तस्य प्रहारविकारोऽयं मे ललाट एवं विकरालतां गतः। तदाकर्ण्य राजा सव्रीडमाह—अहो! वञ्चितोऽहं राजपुत्रानुकारिणानेन कुलालेन। तदीयतां द्रागेतस्य [13]चन्द्रार्धः। तथानुष्ठिते कुम्भकार आह—मा मैवं कुरु। पश्य मे रणे हस्तलाघवम्। राजा प्राह—भोः! सर्वगुणसम्पन्नो भवान्। तथापि गम्यताम्।

उक्तं च—

> शूरश्च कृतविद्यश्च दर्शनीयोऽसि पुत्रक!।
> यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते॥ ३१॥

कुलाल आह—कथमेतत्। राजा कथयति—

---

१. खर्परस्य अग्रभागेन २. रक्तलिप्तगात्रः। ३. भयङ्करताम्।
४. कृपातिशयम्। ५. अयं वीरो न वेति परीक्षायाम्।
६. युद्धे। ७. सज्यमानेषु। ८. उद्योज्यमानेषु।
९. युद्धयोग्यतां प्राप्यमाणेषु। १०. अवसरानुरूपम्।
११. स्वभावत इत्यर्थः। १२. घूर्णमानः। १३. गलहस्तः।

# कथा (३)

कस्मिंश्चिद्देशे[1] सिंहदम्पती प्रतिवसतः स्म। अथ सिंही पुत्रद्वयमजीजनत[2]। सिंहोऽपि नित्यमेव मृगान्व्यापाद्य सिंह्यै ददाति। अथान्यस्मिन्नहनि तेन किमपि नासादितम्। येन भ्रमतोऽपि तस्य रविरस्तं गतः। अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः। स च बालकोऽयमित्यवधार्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान्। ततः सिंह्याऽभिहितम्—भोः कान्त! त्वयानीतं किंचिदस्माकं भोजनम्?। सिंह आह—प्रिये! मयाद्यैनं शृगालशिशुं परित्यज्य न किंचित्सत्त्वमासादि म्। स च मया बालोऽयमिति मत्वा न व्यापादितो विशेषात्स्वजातीयश्च[3]। उक्तं च—

स्त्रीविप्रलिङ्गिबालेषु प्रहर्तव्यं न कर्हिचित्।
प्राणत्यागेऽपि सञ्जाते विश्वस्तेषु विशेषतः॥ ३२॥

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु। प्रभातेऽन्यत्किञ्चिदुपार्जयिष्यामि। सा प्राह—भोः कान्त! त्वया बालकोऽयं विचिन्त्य न हतः। तत्कथमेनमहं [4]स्वोदरार्थे विनाशयामि। उक्तं च—

अकृत्यं नैव कर्तव्यं प्राणात्यागेऽपि संस्थिते।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः॥ ३३॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति। इत्येवमुक्त्वा तमपि [5]स्वस्तनक्षीरेण परां पुष्टिमनयत्। एवं ते त्रयोऽपि शिशवः परस्परमज्ञातजातिविशेषा[6] एकाचारविहारा बाल्यसमयं निर्वाहयन्ति[7]। अथ कदाचित्तत्र वने भ्रमन्नरण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्, तावत्तेन शृगालसुतेन अभिहितम्—अहो! गजोऽयं युष्मत्कुलशत्रुः। तन्न गन्तव्यमेतस्याभिमुखम् एवमुक्त्वा गृहं प्रधावितः। तावपि [8]ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ। अथवा साध्विदमुच्यते—

---

१. स्थाने। २. उत्पादयामास। ३. पशुजातीयश्चेत्यर्थः।
४. निजोदरभरणार्थम् इति यावत्। ५. स्वदुग्धप्रदानेनेत्यर्थः।
६. कः किञ्जातीय इत्यजानन्तः। ७. यापयन्ति।
८. ज्येष्ठस्य बान्धवस्य भ्रातुरिति यावत्, भङ्गात् पलायनात्।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥ ३४ ॥

तथा च—अत एव हि वाञ्छन्ति भूपा योधान्महाबलान् ।
शूरान्वीरान्कृतोत्साहान्वर्जयन्ति च कातरान् ॥ ३५ ॥

अथ तौ द्वावपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुः । यथा 'गजं दृष्ट्वा दूरतोऽपि नष्टः' । सोऽपि तदाकर्ण्य कोपाविष्टमनाः [1]प्रस्फुरिताधरपल्लवस्ताम्रलोचनः [2]त्रिशिखां भृकुटिं कृत्वा तौ निर्भर्त्सयन्परुषतरवचनान्युवाच । ततः सिंह्यैकान्ते नीत्वा प्रबोधितोऽसौ—वत्स ! मैवं कदाचिज्जल्प । भवदीयलघुभ्रातरावेतौ अथासौ प्रभूतकोपाविष्टस्तामुवाच—किमहमेताभ्यां शौर्येण रूपेण विद्याभ्यासेन कौशलेन वा हीनो येन मामुपहसतः । तन्मयावश्यमेतौ व्यापादनीयौ । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्त्यन्तर्विहस्य[3] प्राह—

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ! ।
यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ३६ ॥

तत्सम्यक् शृणु वत्स ! त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः । तद्यावदेतौ मत्पुत्रौ शिशुत्वात्त्वां शृगालं न जानीतः, तावद् द्रुततरं गत्वा [4]स्वजातीयानां मध्ये मिलितो भव । नोचेदाभ्यां हतो मृत्युपथं समेष्यसि । सोऽपि तद्वचनं श्रुत्वा [5]भयव्याकुलमनाः शनैः शनैरपसृत्य स्वजात्या मिलितः । तस्मात्त्वमपि यावदेते राजपुत्रास्त्वां कुलालं न जानन्ति, तावद् द्रुततरमपसर । नोचेदेतेषां सकाशाद्विडम्बनां प्राप्य मरिष्यसि । कुलालोऽपि तदाकर्ण्य सत्वरं [6]प्रनष्टः । अतोऽहं ब्रवीमि—'स्वार्थमुत्सृज्य यो दम्भी' इति । धिङ् मूर्ख ! यत्त्वया स्त्रियोऽर्थे एतत्कार्यमनुष्ठातुमारब्धम् ।

तद्भो ! दुष्टमकर ! त्वं खलु वध्यः ततो भद्र ! आगतेन त्वया मां प्रति वधोपायप्रयासः प्रारब्धः परं स्ववाग्दोषेणैव प्रकटीभूतः । अथवा साध्विदमुच्यते—

---

१. कम्पिताधरः । २. रक्तनेत्रः । ३. मनसि हासं कृत्वेत्यर्थः । ४. शृगालानाम् । ५. उद्विग्नः । ६. पलायितः ।

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ ३७ ॥

तथा च—सुगुप्तं रक्ष्यमाणोऽपि दर्शयन्दारुणं वपुः ।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः ॥ ३८ ॥

मकर आह— कथमेतत् । वानरः कथयति—

## कथा (४)

कस्मिंश्चिदधिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म । तस्य च गर्दभ एकोऽस्ति । सोऽपि घासाभावादतिदुर्बलतां गतः । अथ तेन रजकेनाटव्यां परिभ्रमता मृतव्याघ्रो दृष्टः । चिन्तितं च—अहो ! शोभनमापतितम् । अनेन व्याघ्रचर्मणा [1]प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषूत्स्रक्ष्यामि[2] । येन व्याघ्रं मत्वा समीपवर्तिनः क्षेत्रपाला एनं न निष्कासयिष्यन्ति । तथानुष्ठिते रासभो यथेच्छया यवभक्षणं करोति । प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति । एवं गच्छता कालेन स रासभः [3]पीवरतनुर्जातः । कृच्छ्राद् बन्धनस्थानमपि नीयते । अथान्यस्मिन्नहनि स मदोद्धतो दूराद्रासभीशब्दमशृणोत् । तच्छ्रवणमात्रेणैव स्वयं शब्दायितुमारब्धः । अथ ते क्षेत्रपाला रासभोऽयं [4]व्याघ्रचर्मप्रतिच्छन्न इति ज्ञात्वा लगुडशरपाषाणप्रहारैः तं व्यापादितवन्तः । अतोऽहं ब्रवीमि—'सुगुप्तं रक्ष्यमाणोऽपि' इति । अथैवं तेन सह वदतो मकरस्य, जलचरेणैकेनागत्याभिहितम्—भो ! मकर ! त्वदीया भार्यानशनोपविष्टा त्वयि [5]चिरयति प्रणयाभिभवाद्विपन्ना[6] । एवं तद्वज्रपातसदृशवचनमाकर्ण्यातीव [7]व्याकुलितहृदयः [8]प्रलपितमेव चकार—अहो ! किमिदं सञ्जातं मे मन्दभाग्यस्य । उक्तं च—

माता यस्य गृहे नास्ति भार्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथागृहम् ॥ ३९ ॥

---

१. आच्छाद्य । २. यवान् भक्षयितुं मोक्ष्यामि । ३. परिपुष्टशरीरः । ४. व्याघ्रचर्मावृत इत्यर्थः । ५. विलम्बमाने सति । ६. मृत्युं प्राप्ता । ७. खिन्नचित्तः । ८. विलापम् ।

तन्मित्र ! क्षम्यताम् । मया तेऽपराधः कृतः । संप्रत्यहं तु स्त्रीवियोगाद्वैश्वानरप्रवेशं करिष्यामि । तच्छ्रुत्वा वानरः प्रहसन्प्रोवाच—भोः । ज्ञातं मया प्रथममेव यत्त्वं स्त्रीवश्यः स्त्रीजितश्च । सांप्रतं च प्रत्ययः संजातः । तन्मूढ । आनन्देऽपि जाते त्वं विषादं गतः । तादृग्भार्यायां मृतायामुत्सवः कर्तुं युज्यते । उक्तं च यतः—

या भार्या दुष्टचारित्रा सततं कलहप्रिया ।
भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ ४० ॥
यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः ।
यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥ ४१ ॥
अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥ ४२ ॥
ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः ।
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ ४३ ॥
आस्तां तावत्किमन्येन दौरात्म्येनेह योषिताम् ।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा ॥ ४४ ॥
रूक्षायां स्नेहसद्भावं कठोरायां सुमार्दवम् ।
नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ४५ ॥

मकर आह—भो ! मित्र ! अस्त्वेतत् । परं किं करोमि । ममानर्थद्वयमेतत्सञ्जातम् । एकस्तावद् गृहभङ्गः, अपरस्त्वद्विधेन मित्रेण सह चित्तविश्लेषः । अथवा भवत्येवं दैवयोगात् ।

एवं तस्य कथयतः पुनरन्येन जलचरेणागत्य निवेदितम्—यदहो ! त्वदीयं गृहमप्यपरेण महामकरेण [1]गृहीतम् । तच्छ्रुत्वासौ अतिदुःखितमनास्तं गृहान्निःसारयितुमुपायं चिन्तयन्नुवाच—अहो ! पश्यतां मे [2]दैवोपहतत्वम् ।

मित्रं ह्यमित्रतां यातमपरं मे प्रिया मृता ।
गृहमन्येन च व्याप्तं किमद्यापि भविष्यति ॥ ४६ ॥

अथवा युक्तमिदमुच्यते—

क्षते प्रहारा निपतन्त्यभीक्ष्णमन्नक्षये वर्धति जाठराग्निः ।

---

१. अधिकृतम् । २. दुर्भाग्यताम् ।

आपत्सु वैराणि समुद्भवन्ति वामे विधौ सर्वमिदं नराणाम् ॥ ४७ ॥

तत्किं करोमि । किमनेन सह युद्धं करोमि । किं वा साम्नैव सम्बोध्य गृहान्निःसारयामि । किं वा भेदं दानं वा करोमि । अथवामुमेव वानरमित्रं पृच्छामि । उक्तं च—

यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वहितान्गुरून् ।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ४८ ॥

एवं सम्प्रधार्य भूयोऽपि तमेव जम्बूवृक्षमारूढं कपिमपृच्छत्—भो ! मित्र ! पश्य मे मन्दभाग्यताम् । यत्सम्प्रति गृहमपि मे बलवत्तरेण मकरेण रुद्धम् । तदहं त्वां प्रष्टुमभ्यागतः । कथय किं करोमि । समादीनामुपायानां मध्ये कस्यात्र विषयः ? । स आह—भोः । कृतघ्न ! पापचारिन् ! मया निषिद्धोऽपि किं भूयो मामनुसरसि ? नाहं तव मूर्खस्योपदेशमपि दास्यामि । तच्छ्रुत्वा मकरः प्राह—भो ! मित्र ! सापराधस्य मे पूर्वस्नेहमनुस्मृत्य हितोपदेशं देहि । वानर आह—नाहं ते कथयिष्यामि । यद्भार्यावाक्येन भवताहं समुद्रे प्रक्षेप्तुं नीतः । तदेवं न युक्तम् । यद्यपि भार्या सर्वलोकादपि वल्लभा भवति तथापि न मित्राणि बान्धवाश्च भार्यावाक्येन समुद्रे प्रक्षिप्यन्ते । तन्मूर्ख ! मूढत्वेन नाशस्तव प्रागेव निवेदित आसीत् । यतः—

सतां वचनमादिष्टं मदेन न करोति यः ।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम् ॥ ४९ ॥

मकर आह—कथमेतत् । सोऽब्रवीत्—

## कथा (५)

कस्मिंश्चिदधिष्ठाने[1] उज्ज्वलको नाम रथकारः प्रतिवसति स्म । स चातीव दारिद्र्योपहतश्चिन्तितवान्—अहो ! धिगियं दरिद्रतास्मद्गृहे । यतः सर्वोऽपि जनः स्वकर्मणैव रतस्तिष्ठति । अस्मदीयः पुनर्व्यापारो नात्राधिष्ठानेऽर्हति । यतः सर्वलोकानां [2]चिरन्तनाश्चतुर्भूमिका[3] गृहाः सन्ति । मम एकमपि तन्नास्ति । तत्किं मदीयेन

१. स्थाने । २. प्राचीनाः कुलपरम्परागता इत्यर्थः ।
३. चतुःप्रकोष्ठकाः ।

रथकारत्वेन प्रयोजनम् । इति चिन्तयित्वा देशान्निष्क्रान्तः । यावत् किंचिद्वन गच्छति तावद्गह्वराकारवनगहनमध्ये[1] सूर्यास्तमनवेलायां स्वयूथाद् भ्रष्टां प्रसववेदनया पीड्यमानामुष्ट्रीमपश्यत् । स च [2]दासेरकयुक्तामुष्ट्रीं गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः । गृहमासाद्य रज्जुं गृहीत्वा तामुष्ट्रीकां बबन्ध । ततश्च तीक्ष्णं परशुमादाय तस्याः कृते पल्लवानयनार्थं पर्वतैकदेशे गतः । तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्त्वा शिरसि समारोप्य तस्या अग्रे निचिक्षेप । तया च तानि शनैः शनैर्भक्षितानि । पश्चात्पल्लवभक्षणप्रभावादहर्निशं [3]पीवरतनुरुष्ट्री सञ्जाता । सोऽपि दासेरको महानुष्ट्रः सञ्जातः । ततः स नित्यमेव दुग्धं गृहीत्वा स्वकुटुम्बं परिपालयति । अथ रथकारेण वल्लभत्वाद्दासेरकग्रीवायां महती घण्टा प्रतिबद्धा । पश्चाद्रथकारो व्यचिन्तयत्—अहो । किमन्यैर्दुष्कृतकर्मभिः[4] यावन्ममैतस्मादेवोष्ट्रीपरिपालनादस्य कुटुम्बस्य [5]भव्यं सञ्जातम् । तत्किमन्येन व्यापारेण । एवं विचिन्त्य गृहमागत्य प्रियामाह—भद्रे ! समीचीनोऽयं व्यापारः । तव सम्मतिश्चेत्कुतोऽपि धनिकात्किञ्चिद् द्रव्यमादाय मया गुर्जरदेशे गन्तव्यं करभग्रहणाय । तावत्त्वयैतौ यत्नेन रक्षणीयौ । यावदहमपरामुष्ट्रीं नीत्वा समागच्छामि । ततश्च गुर्जरदेशं गत्वोष्ट्रीं गृहीत्वा स्वगृहमागतः । किं बहुना । तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्र्यः करभाश्च सम्मिलिताः । ततस्तेन महदुष्ट्रयूथं कृत्वा रक्षापुरुषो धृतः । तस्य वर्षं प्रति वृत्त्या करभमेकं प्रयच्छति । अन्यच्चाहर्निशं दुग्धपानं तस्य निरूपितम् । एवं रथकारोपि नित्यमेवोष्ट्रीकरभव्यापारं कुर्वन्सुखेन तिष्ठति । अथ ते दासेरकाः [6]अधिष्ठानोपवने आहारार्थं गच्छन्ति । कोमलवल्लीर्यथेच्छया भक्षयित्वा महति सरसि पानीयं पीत्वा सायन्तनसमये मन्दं मन्दं लीलया गृहमागच्छन्ति । स च पूर्वदासेरको मदातिरेकात्पृष्ठ आगत्य मिलति । ततस्तः कलभैरभिहितम्—अहो ! मन्दमतिरयं दासेरको यथा यूथाद् भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन्नागच्छति । यदि कस्यापि दुष्टसत्त्वस्य मुखे

१. सघनवनमध्ये । २. उष्ट्रशिशुसहिताम् । ३. परिपुष्टगात्रा ।
४. कष्टसाध्यैः कर्मभिः । ५. कल्याणम् ।
६. नगरसमीपवर्तिनि कानने ।

पनिष्यति तन्नूनं मृत्युमवाप्स्यति। अथैकस्तैः [1]असकृदेव निषिद्धः सन्नपि स तद्वचनेकर्णमदत्त्वैव मदातिरेकाद् घण्टां वादयन् वनं प्रविष्टः। इत्थं तस्य तद्वनं [2]गाहमानस्य तत्रस्थः कश्चित्सिंहो घण्टारवमाकर्ण्य शब्दानुसारेण दृष्टिं निपात्य अवलोकयति यदुष्ट्रीदासेरकाणां यूथं गच्छति। स तु पुनः प्रतिदिवसमिव पृष्ठे क्रीडां कुर्वन्वल्लरीश्चरन्यावत्तिष्ठति, तावदन्ये दासेरकाः पानीयं पीत्वा स्वगृहे गताः। ततः सोऽपि वनान्निष्क्रम्य [3]यावद्दिशोऽवलोकयति तावन्न कञ्चिन्मार्गं पश्यति वेत्ति वा। यूथाद् भ्रष्टो मन्दं मन्दं बृहच्छब्दं कुर्वन्यावत्कियद्दूरं गच्छति, तावत्तच्छब्दानुसारी सिंहोऽपि क्रमं कृत्वा[4] निभृतोऽग्रे व्यवस्थितः। ततो यावदुष्ट्रः समीपमागतः तावत्सिंहेन [5]लङ्घयित्वा, ग्रीवायां गृहीतो मारितश्च। अतोऽहं ब्रवीमि—'सतां वचनमादिष्टम्' इति। अथ तच्छ्रुत्वा मकरः प्राह—भद्र!

> प्राहुः साप्तपदं मैत्रं जनाः शास्त्रविचक्षणाः।
> मित्रतां च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥५०॥

> उपदेशप्रदातॄणां नराणां हितमिच्छताम्।
> परस्मिन्निहलोके च व्यसनं नोपपद्यते ॥ ५१ ॥

तत्सर्वथा कृतघ्नस्यापि मे कुरु प्रसादमुपदेशप्रदानेन। उक्तं च—

> उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।
> अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ५२ ॥

तदाकर्ण्य वानरः प्राह—भद्र! यद्येवं तर्हि तत्र गत्वा तेन सह युद्धं कुरु। उक्तं च—

> हतस्त्वं प्राप्स्यसि स्वर्गं जीवन्गृहमथो यशः।
> युद्ध्यमानस्य ते भावि गुणद्वयमनुत्तमम् ॥ ५३ ॥

> उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
> नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ५४ ॥

मकरः प्राह—कथमेतत्। सोऽब्रवीत्—

---

१. पुनः पुनः। २. प्रविशतो भ्रमत इति यावत्। ३. इतस्ततः पश्यति। ४. तिरोहितः सन्नित्यर्थः। ५. उत्प्लुत्येति यावत्।

# कथा (६)

आसीत्कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः। तेन कदाचिदरण्ये स्वयं मृतो गजः समासादितः। तस्य समन्तात्परिभ्रमति परं कठिनां त्वचं भेत्तुं न शक्नोति। अथात्रावसरे इतश्चेतश्च विचरन् कश्चित्सिंहस्तत्रैव प्रदेशे समाययौ। अथ सिंहं समागतं दृष्ट्वा स [1]क्षितितलविन्यस्तमौलिमण्डलः [2]संयोजितकरयुगलः सविनयम् उवाच-स्वामिन्! त्वदीयोऽहं [3]लागुडिकः स्थितस्त्वदर्थं गजमिमं रक्षामि। तदेनं भक्षयतु स्वामी। तं प्रणतं दृष्ट्वा सिंहः प्राह—भोः! नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि। उक्तं च—

वनेऽपि सिंहा मृगमांसभक्ष्या बुभुक्षिता नैव तृणं चरन्ति।
एवं कुलीना व्यसनाभिभूता न नीतिमार्गं परिलङ्घयन्ति ॥ ५५ ॥

तत्तवैव गजोऽयं मया [4]प्रसादीकृतः। तच्छ्रुत्वा शृगालः सानन्दमाह—युक्तमिदं स्वामिनो निजभृत्येषु। उक्तञ्च यतः—

अन्त्यावस्थोऽपि महान्स्वामिगुणान्नो जहाति शुद्धतया।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तिमुक्तोऽपि ॥ ५६ ॥

अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ। तमपि दृष्ट्वासौ व्यचिन्तयत्—अहो! एकस्तावद् दुरात्मा प्रणिपातेनापवाहितः[5]। तत्कथमिदानीम् एनमपवाहयिष्यामि[6]। नूनं शूरोऽयम्। न खलु भेदं विना साध्यो भविष्यति। उक्तं च यतः—

न यत्र शक्यते कर्तुं साम्ना दानमथापि वा।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥ ५७ ॥

किंच, सर्वगुणसंपन्नोऽपि भेदेन बध्यते। उक्तं च यतः—

अन्तःस्थेन विरुद्धेन संवृत्तेनातिचारुणा।
अन्तर्भिन्नेन संप्राप्तं मौक्तिकेनापि बन्धनम् ॥ ५८ ॥

एवं [7]संप्रधार्य तस्याभिमुखो भूत्वा गर्वादुन्नतकन्धरः ससंभ्रममु-

---

१. क्षितितले भूमौ विन्यस्तं स्थापितं मौलिमण्डलं मस्तकमण्डलं येन सः प्रणमन्नित्यर्थः। २. बद्धाञ्जलिरित्यर्थः। ३. यष्टिधारी सेवक इत्यर्थः। ४. सानुग्रहं प्रदत्तः। ५. दूरीकृतः। ६. दूरीकरिष्यामि। ७. विचार्य।

वाच—माम ! कथमत्र भवान्मृत्युमुखे प्रविष्टः। येनैष गजः सिंहेन व्यापादितः। स च मामेतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः। तेन च गच्छता मम समादिष्टम्—यदि कश्चिदिह व्याघ्रः समायाति, त्वया सुगुप्तं ममावेदनीयम्। येन वनमिदं मया निर्व्याघ्रं कर्तव्यम् यतः पूर्व व्याघ्रेणैकेन मया व्यापादितो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः। तद्दिनादारभ्य व्याघ्रान्प्रति प्रकुपितोऽस्मि। तच्छ्रुत्वा व्याघ्रः संत्रस्तस्तमाह भो ! भागिनेय ! देहि मे प्राणदक्षिणाम्[1]। त्वया तस्यात्र चिरायाया-तस्यापि मदीया कापि वार्ता नाख्येया। एवमभिधाय सत्वरं पलायांचक्रे अथ गते व्याघ्रे तत्र कश्चिद् [2]द्वीपी समायातः। तमपि दृष्ट्वासौ व्यचिन्तयत्—दृढदंष्ट्रोऽयं [3]चित्रकः। तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति तथा करोमि। एवं निश्चित्य तमप्युवाच—भो ! भगिनीसुत। किमिति चिराद् दृष्टोऽसि। कथं च बुभुक्षित इव लक्ष्यसे। तदतिथिरसि मे। एष गजः सिंहेन हतस्तिष्ठति। अहं चास्य तदादिष्टो रक्षपालः। परं तथापि यावत्सिंहो न समायाति, तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज। स आह—माम ! यद्येवं तन्न कार्यं मे मांसाशनेन, यतः 'जीवन्नरो भद्रशतानि पश्यति।' उक्तं च—

यच्छक्यं ग्रसितुं शस्तं ग्रस्त परिणमेच्च यत्।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ ५९ ॥

तत्सर्वथा तदेव भुज्यते यदेव [4]परिणमति। तदहमितोऽपयास्यामि[5]। शृगाल आह—भो ! अधीर ! विश्रब्धो भूत्वा भक्षय त्वम् तस्यागमनं दूरतोऽपि तवाहं निवेदयिष्यामि। तथानुष्ठिते द्वीपिना [6]भिन्नां [7]त्वचं विज्ञाय जम्बूकेनाभिहितम्—भो! भगिनीसुत! गम्यताम्। एष सिंहः समायाति। तच्छ्रुत्वा चित्रको दूरं प्रनष्टः। अथ यावदसौ [8]तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति तावदतिसंक्रुद्धोऽपरः शृगालः समाययौ। अथ तमात्मतुल्यपराक्रमं दृष्ट्वैनं श्लोकमपठत्—

---

१. मां रक्षेति भावः। २. व्याघ्रविशेषः। ३. शार्दूलः (चीता)। ४. परिपाकं गच्छति। ५. पलायिष्ये। ६. विदारिताम्। ७. चर्म। ८. तस्याः त्वचो यो भेदो विदारणं तेन कृतं यद् द्वारं छिद्रं तेनेत्यर्थः

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ६० ॥

ततश्च [1]तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिस्तं विदार्य [2]दिशोभागं कृत्वा स्वयं सुखेन चिरकाल हस्तिमांसं बुभुजे । एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन [3]परिभूय दिशोभागं कुरु ।

नो चेत्पश्चाद्[4] बद्धमूलादस्मात्त्वमपि विनाशमवाप्स्यसि । उक्तञ्च

यतः—सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः ।
सम्भाव्यं स्त्रीषु चापल्यं सम्भाव्यं जातितो भयम् ॥ ६१ ॥
सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥ ६२ ॥

मकर आह—कथमेतत् । वानरोऽब्रवीत्—

## कथा (७)

अस्ति कस्मिंश्चिदधिष्ठाने चित्राङ्गो नाम [5]सारमेयः । तत्र च चिरकालं दुर्भिक्षं पतितम् । अन्नाभावात्सारमेयादयो [6]निष्कुलतां गन्तुमारब्धाः । अथ चित्राङ्गः [7]क्षुत्क्षामकण्ठस्तद्भयाद्देशान्तरं गतः । तत्र च कस्मिंश्चित्पुरे कस्यचिद् [8]गृहमेधिनो गृहिण्याः प्रमादेन प्रतिदिनं गृहं प्रविश्य विविधान्नानि भक्षयन्परां तृप्तिं गच्छति । परं तद्गृहाद्बहिर्निष्क्रान्तोऽन्यैर्मदोद्धतसारमेयैः [9]सर्वदिक्षु परिवृत्य सर्वाङ्गं दंष्ट्राभिर्विदार्यते । ततस्तेन विचिन्तितम्—'अहो ! वरं स्वदेशो यत्र दुर्भिक्षेऽपि सुखेन स्थीयते । न च कोऽपि युद्धं करोति । तदेवं स्वनगरं व्रजामि' त्यवधार्य स्वस्थानं प्रति जगाम । अथासौ देशान्तरात्समायातः सर्वैरपि स्वजनैः पृष्टः—'भोश्चित्राङ्ग ! कथयास्माकं देशान्तरवार्ताम् । कीदृग्देशः ।

---

१. तस्य शृगालस्य अभिमुखं कृतं प्रयाणं युद्धाय गमनं येन सः ।
२. दिग्देवताभ्यो बलिं प्रदायेत्यर्थः । ३. पराजित्येति भावः ।
४. बहुकालाधिकारेण दृढमूलादिति भावः । ५. श्वा ।
६. परस्परमनपेक्ष्य यथेच्छमितस्ततो गन्तुं प्रवृत्ता इत्यर्थः ।
७. बुभुक्षित इति भावः । ८. गृहस्थस्येत्यर्थः ।
९. सर्वतो वेष्टयित्वा ( घेर कर )

किं चेष्टितं लोकस्य । क्व आहारः । कश्च व्यवहारस्तत्र' इति । स आह—कथ्यते विदेशस्य [1]स्वरूपविषयः—

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥ ६३ ॥

सोऽपि मकरस्तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरमनुज्ञाप्य स्वाश्रयं गतः । तत्र च तेन स्वगृहप्रविष्टेनाततायिना[2] सह विग्रहं कृत्वा [3]दृढसत्त्वावष्टम्भनाच्च तं व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकालमतिष्ठत् । अतः साध्विदमुच्यते—

अकृत्वा पौरुषं या श्रीः किं तयापि सुभोग्यया ।
जरद्गवः समश्नाति दैवादुपगतं तृणम् ॥ ६४ ॥

इति विष्णुशर्मविरचिते पञ्चतन्त्रके लब्धप्रणाशं नाम
चतुर्थं तन्त्रं समाप्तम् ।

--:※:--

# अपरीक्षितकारकम्

अथेदमारभ्यतेऽपरीक्षितकारकं[4] नाम पञ्चमं तन्त्रम्; यस्यायमादिमः श्लोकः—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥ १ ॥

तद्यथोनुश्रूयते—अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम् । तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च [5]धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशात्[6] धनक्षयः[7] सञ्जातः । ततो विभवक्षया-

---

१. वर्णनमित्यर्थः । २. अरिणा ।

३. दृढस्य सत्त्वस्य बलस्य धैर्यस्य वा अवष्टम्भनाद् अवलम्बनाच्चेत्यर्थः ।

४. अविद्यमानाः परीक्षितकारकाः परीक्षापूर्वकं कार्यकर्तारो यत्र तत् ।

५. धर्मः = यागादिः, अर्थः = धनम्, कामः = विषयानुभवः, मोक्षः = मुक्तिः, एषां कर्माणि = साधनात्मिकाः क्रियाः । ६. दुर्भाग्यवशात् ।

७. धननाशो दरिद्रतेत्यर्थः ।

दपमानपरम्परया परं विषादं गतः । अथान्यदा रात्रौ सुप्तश्चिन्तितवान्—अहो ! धिगियं दरिद्रता । उक्तं च—

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे वित्तविहीनस्य पुरुषस्य ॥ २ ॥

मानो वा दर्पो विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं वित्तविहीनो यदा पुरुषः ॥ ३ ॥

प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः ।
बुद्धिर्बुद्धिमतामपि कुटुम्बभरचिन्तया सततम् ॥ ४ ॥

नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य ।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥

गगनमिव नष्टतारं शुष्कमिव सरः श्मशानमिव रौद्रम् ।
प्रियदर्शनमपि रूक्षं भवति गृहं धनविहीनस्य ॥ ६ ॥

न विभाव्यन्ते लघवो वित्तविहीनाः पुरोऽपि निवसन्तः ।
सततं जातविनष्टाः पयसामिव बुद्बुदाः पयसि ॥ ७ ॥

सुकुलं कुशलं सुजनं विहाय कुलकुशलशीलविकलेऽपि ।
आढ्ये कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥ ८ ॥

विफलमिह पूर्वसुकृतं विद्यावन्तोऽपि कुलसमुद्भूताः ।
यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥ ९ ॥

लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम् ।
सर्वमलज्जाकरमिह यत्कुर्वन्तीह परिपूर्णाः ॥ १० ॥

एवं [1]सम्प्रधार्य भूयोऽप्यचिन्तयत्-तदहमनशनं कृत्वा प्राणानुत्सृजामि । किमनेन नो [2]व्यर्थजीवितव्यसनेन । एवं निश्चयं कृत्वा सुप्तः । अथ तस्य स्वप्ने [3]पद्मनिधिः क्षपणकरूपी[4] दर्शनं दत्त्वा प्रोवाच—भोः ! श्रेष्ठिन् ! मा त्वं वैराग्यं गच्छ । अहं पद्मनिधिस्तव [5]पूर्वपुरुषोपार्जितः । तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि । ततः त्वयाहं लगुड-

---

१. निश्चयं कृत्वा ।
२. व्यर्थेन = प्रयोजनरहितेन जीवितव्यसनेन = जीवनममतयेति भावः ।
३. तदाख्यनिधिः । ४. बौद्धसन्यासिवेषधारीत्यर्थः ।
५. पूर्वजैः सञ्चितः ।

प्रहारेण शिरसि ताडनीयः, येन कनकमयो भूत्वाऽक्षयो भवामि। अथ प्रातः प्रबुद्धः सन्स्वप्नं स्मरन्[1] चिन्ताचक्रमारूढस्तिष्ठति—अहो! सत्योऽयं स्वप्नः किंवा असत्यो भविष्यति, न ज्ञायते। अथवा नूनं मिथ्या भाव्यम्, यतोऽहं केवलं वित्तमेव [2]चिन्तयामि।

एतस्मिन्नन्तरे तस्य भार्यया कश्चिन्नापितः पादप्रक्षालनायाहूतः। अत्रान्तरे च यथानिर्दिष्टः क्षपणकः सहसा [3]प्रादुर्बभूव। अथ स तमालोक्य प्रहृष्टमना आसन्नकाष्ठदण्डेन तं शिरस्यताडयत्। सोऽपि सुवर्णमयो भूत्वा तत्क्षणाद् भूमौ निपतितः। अथ स श्रेष्ठी निभृतं स्वगृहमध्ये कृत्वा नापितं संतोष्य प्रोवाच—तदेतद्धनं वस्त्राणि च मया दत्तानि गृहाण भद्र! पुनः कस्यचिन्नाख्येयो[4] वृत्तान्तः। नापितोऽपि स्वगृहं गत्वा व्यचिन्तयत्—'नूनमेते सर्वेऽपि नग्नकाः शिरसि दण्डहताः काञ्चनमया भवन्ति। तदहमपि प्रातः प्रभूतानाहूय लगुडैः शिरसि हन्मि, येन प्रभूतं हाटकं मे भवति। एवं चिन्तयतो महता कष्टेन निशा अतिचक्राम। अथ प्रभातेऽभ्युत्थाय बृहल्लगुडमेकं [5]प्रगुणीकृत्य [6]क्षपणकविहारं गत्वा [7]जिनेन्द्रस्य प्रदक्षिणत्रयं विधाय जानुभ्यामवनिं गत्वा [8]वस्त्रद्वारन्यस्तोत्तरीयाञ्चलः [9]तारस्वरेणेमं श्लोकमपठत्—

जयन्ति ते जिना येषां केवलज्ञानशालिनाम्।
आजन्मनः स्मरोत्पत्तौ मानसेनोषरायितम्॥ ११॥

अन्यच्च—सा जिह्वा या जिनं स्तौति तच्चित्तं यज्जिने रतम्।
तावेव च करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ॥ १२॥

एवं संस्तुत्य ततः प्रधानक्षपणकमासाद्य [10]क्षितिनिहितजानुचरणः, 'नमोऽस्तु वन्दे' इत्युच्चार्य [11]लब्धधर्मवृद्ध्याशीर्वादः [12]सुखमालिकान्-

---

१. चिन्तामग्नः। २. ध्यायामि। ३. समक्ष प्रकटोऽभूदित्यर्थः। ४. नैव कथनीयः। ५ तैलादिमर्दनपूर्वकं सज्जीकृत्येत्यर्थः। ६. बौद्धसन्यासिनां मठम्। ७. बौद्धाचार्यस्य। ८. वस्त्रेण पिहिताननः। ९. उच्चैः। १०. क्षितौ भूमौ निहितजानुचरणः दत्तजानुपादः। ११. लब्धः क्षपणकात्प्राप्तः धर्मवृद्धये पुण्यवर्धनाय आशीर्वादः 'पुण्यं ते वर्धताम्' इत्याशीर्वचनं येन सः। १२. सुखा आनन्दकरी या मालिका स्रक् तदर्पणमिति भावः तया योऽनुग्रहः कृपादृष्टिः तेन लब्धः व्रताय नियमाय आदेशः दीक्षा येन सः।

ग्रहलब्धव्रतादेशः [1]उत्तरीयनिबद्धग्रन्थिः [2]सप्रश्रयमिदमाह—भगवन् अद्य [3]विहरणक्रिया समस्तमुनिसमेतेनास्मद्गृहे कर्तव्या। स आह—भोः! [4]श्रावक! धर्मज्ञोऽपि किमेवं वदसि। किं वयं ब्राह्मणसमानाः यतः [5]आमन्त्रणं करोषि। वयं सदैव [6]तत्कालपरिचर्यया भ्रमन्तो भक्तिभाजं श्रावकमवलोक्य तस्य गृहे गच्छामः। तेन [7]कृच्छ्रादभ्यर्थितास्तद्गृहे प्राणधारणमात्रामशनक्रियां कुर्मः। तद्गम्यताम्। नैवं भूयोऽपि वाच्यम्। तच्छ्रुत्वा नापित आह—भगवन्! वेद्म्यहं युष्मद्धर्मम्। परं भवतो बहुश्रावका आह्वयन्ति साम्प्रतं पुनः पुस्तकाच्छादनयोग्यानि कर्पटानि बहुमूल्यानि [8]प्रगुणीकृतानि। तथा पुस्तकानां लेखनाय लेखकानाञ्च वित्तं सञ्चितमास्ते। तत्सर्वथा कालोचितं कार्यम्। ततो नापितोऽपि स्वगृहं गतः। तत्र च गत्वा खदिरमयं लगुडं सज्जीकृत्य कर्पटयुगलं द्वारि समाधाय सार्धप्रहरैकसमये भूयोपि [9]विहारद्वारमाश्रित्य सर्वान्क्रमेण निष्क्रामतो [10]गुरुप्रार्थनया स्वगृहमानयत्। तेऽपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान्परित्यज्य प्रहृष्टमनसस्तस्य पृष्ठतो ययुः। अथवा साध्विदमुच्यते—

एकाकी गृहसंत्यक्तः पाणिपात्रो दिगम्बरः।
सोऽपि संवाह्यते लोके तृष्णया पश्य कौतुकम्॥ १३॥

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते॥ १४॥

अपरं गृहमध्ये तान् प्रवेश्य द्वारं [11]निभृतं पिधाय लगुडप्रहारैः शिरस्यताडयत्। तेऽपिताड्यमाना एके मृताः, अन्ये भिन्नमस्तकाः [12]फूत्कर्तुमुपचक्रमिरे। अत्रान्तरे। [13]तमाक्रन्दमाकर्ण्य [14]कोटरक्षपालैरभि-

---

१. उत्तरीयेण प्रावारकेण निबद्धः ग्रन्थिः येन सः।
२. विनयपूर्वकम्। ३. भोजनक्रियेत्यर्थः ४. गृहस्थ!।
५. निमन्त्रणमिति यावत्। ६. भोजनकालोचितसेवया।
७. साग्रहं प्रार्थिता इति यावत्।
८. संगृहीतानि। ९. बौद्धानां मठस्य द्वारदेशे स्थित्वा।
१० महत्या प्रार्थनयेति यावत्। ११. शनैरिति तात्पर्य्यम्।
१२. कोलाहलञ्चक्रुः। १३. तं कोलाहलम्। १४. नगररक्षकैः पुरुषैः।

हितम्—भोः! भोः! किमयं महान्कोलाहलो नगरमध्ये। तद्गम्यतां गम्यताम्। ते च सर्वे तदादेशकारिणस्तत्सहिता वेगात्तद्गृहं गता याव-त्पश्यन्ति, तावत् [1]रुधिरप्लावितदेहाः पलायमानाः [2]नग्नका दृष्टाः। पृष्टाश्च-भोः! किमेतत्? ते प्रोचुर्यथावस्थितं नापितवृत्तान्तम्। तैरपि स नापितो बद्धो हतशेषैः सह धर्माधिष्ठानं नीतः। तैर्नापितः पृष्टः—भोः! किमेतद्भवताकुकृत्यमनुष्ठितम्?। स आह—किं करोमि मया श्रेष्ठिमणि-भद्रगृहे दृष्ट एवंविधो [3]व्यतिकरः। सोऽपि सर्वं मणिभद्रवृत्तान्तं यथा-दृष्टमकथयत्। ततः श्रेष्ठिनमाहूय [4]भणितवन्तः—भोः! श्रेष्ठिन् किं त्वया कश्चित्क्षपणको [5]व्यापादितः? ततस्तेनापि सर्वः क्षपणकवृत्तान्तः तेषां निवेदितः। अथ तैरभिहितम्-अहो! शूलमारोप्यतामसौ दुष्टात्मा [6]कुपरीक्षितकारी नापितः। तथानुष्ठिते तैरभिहितम्—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम्।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम्॥ १५॥

अथवा साध्विदमुच्यते—

अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम्
पश्चाद्भवति सन्तापो ब्राह्मण्यां नकुलार्थतः॥ १६॥

मणिभद्र आह—कथमेतत्। ते धर्माधिकारिणः प्रोचुः—

## कथा (१)

कस्मिंश्चिदधिष्ठाने देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म। तस्य भार्या प्रसूता सुतमजनयत्। तस्मिन्नेव दिने नकुली नकुलं प्रसूता। अथ सा सुतवत्सला [7]दारकवत्तमपि नकुलं [8]स्तन्यदानाभ्यङ्गमर्दनादिभिः पुपोष। परं तस्य न विश्वसिति। अपत्यस्नेहस्य [9]सर्वस्नेहातिरिक्ततया सत-तम् एवमाशङ्कते यत्कदाचिदेष स्वजातिदोषवशादस्य दारकस्य विरुद्धमा-चरिष्यति। उक्तं च—

---

१. रुधिरेण = आप्लावितदेहा रक्तसिक्तशरीरा रक्तस्नाता इत्यर्थः।
२. क्षपणकाः। ३. व्यवहारः। ४. उक्तवन्तः।
५. हतः। ६. अविमृश्यकारी। ७. पुत्रवत्।
८. दुग्धदानतैलमर्दनप्रभृतिभिः। ९. सकलस्नेहश्रेष्ठतयेत्यर्थः।

कुपुत्रोऽपि भवेत्पुंसां हृदयानन्दकारकः ।
दुर्विनीतः कुरूपोऽपि मूर्खोऽपि व्यसनी खलः ॥ १७ ॥
एवं च भाषते लोकश्चन्दनं किल शीतलम् ।
पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते ॥ १८ ॥
सौहृदस्य न वाञ्छन्ति जनकस्य हितस्य च ।
लोकाः प्रपालकस्यापि यथा पुत्रस्य बन्धनम् ॥ १९ ॥

अथ सा कदाचिच्छय्यायां पुत्रं शाययित्वा जलकुम्भमादाय पतिमुवाच—ब्राह्मण ! जलार्थमहं तडागे यास्यामि, त्वया पुत्रोऽयं नकुलाद्रक्षणीयः । अथ तस्यां गतायां पृष्ठे ब्राह्मणोऽपि शून्यं गृहं मुक्त्वा भिक्षार्थं क्वचिन्निर्गतः । अत्रान्तरे दैववशात्कृष्णसर्पो बिलान्निष्क्रान्तः । नकुलोऽपि तं स्वभाववैरिणं मत्वा भ्रातू रक्षणार्थं सर्पेण सह युद्ध्वा सर्पं खण्डशः कृतवान् । ततो [1]रुधिराप्लावितवदनः सानन्दं [2]स्वव्यापारप्रकाशनार्थं मातुः संमुखे गतः । मातापि तं [3]रुधिरक्लिन्नमुखमवलोक्य शङ्कितचित्ता 'यदनेन दुरात्मना दारको भक्षितः' इति विचिन्त्य कोपात्तस्योपरि तं जलकुम्भं चिक्षेप । एवं सा नकुलं व्यापाद्य यावत्प्रलपन्ती[4] गृह आगच्छति तावत्सुतस्तथैव सुप्तस्तिष्ठति समीपे कृष्णसर्पं खण्डशः कृतमवलोक्य पुत्रवधशोकेनात्मशिरो वक्षःस्थलं च ताडयितुमारब्धा । अत्रान्तरे ब्राह्मणो [5]गृहीतनिर्वापः समायातो यावत्पश्यति तावत् [6]पुत्रशोकाभितप्ता ब्राह्मणी प्रलपति-भो ! भो ! लोभात्मन् ! लोभाभिभूतेन त्वया न कृतं मद्वचः । तदनुभव साम्प्रतं पुत्रमृत्युदुःखवृक्षफलम् । अथवा साध्विदमुच्यते—

अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् ।
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके ॥ २० ॥

ब्राह्मण आह—कथमेतत् । सा प्राह—

---

१. रुधिरेण = रक्तेन आप्लावितम् = लिप्तम्, वदनम् = मुखं यस्य सः ।
२. स्वस्य = आत्मनः = व्यापारस्य = ब्राह्मणकुमाररक्षार्थं सर्पेण साकं युद्धरूपस्य कार्यस्य प्रकाशनार्थम् ।
३. रक्तसिक्तमुखम् ।
४. विलपन्ती ।
५. लब्धभिक्ष इति भावः ।
६. नकुलमरणदुःखितेति भावः ।

## कथा (२)

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रतां गता वसन्ति स्म। ते चापि दारिद्र्योपहताः मन्त्रं चक्रुः—अहो! धिगियं दरिद्रता।

उक्तं च—

वरं वनं व्याघ्रगजादिसेवितं जनेन हीनं बहुकण्टकावृतम्।
तृणानि शय्या परिधानवल्कलं न बन्धुमध्ये धनहीनजीवितम् ॥ २१ ॥

तथा च—

स्वामी द्वेष्टि सुसेवितोऽपि सहसा प्रोज्झन्ति सद्बान्धवाः।
राजन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः॥
भार्या साधु सुवंशजापि भजते नो यान्ति मित्राणि च।
न्यायारोपितविक्रमाण्यपि नृणां येषां न हि स्याद्धनम् ॥ २२ ॥

शूरः सुरूपः सुभगश्च वाग्मी शस्त्राणि शास्त्राणि विदांकरोतु।
अर्थं विना नैव यशश्च मानं प्राप्नोति मर्त्योऽत्र मनुष्यलोके ॥ २३ ॥

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव।
बाह्यः क्षणेन भवतीति विचित्रमेतत् ॥ २४ ॥

तद्गच्छामः कुत्रचिदर्थाय। इति [1]संमन्त्र्य स्वदेशं पुरं च स्वसुहृत्सहितं बान्धवयुतं गृहं च परित्यज्य प्रस्थिताः। अथवा साध्विदमुच्यते-

सत्यं परित्यजति मुञ्चति बन्धुवर्गम्
शीघ्रं विहाय जननीमपि जन्मभूमिम्।
संत्यज्य गच्छति विदेशमभीष्टलोकं
चिन्ताकुलीकृतमतिः पुरुषोऽत्र लोके ॥ २५ ॥

एवं क्रमेण गच्छन्तोऽवन्तीं[2] प्राप्ताः। तत्र [3]सिप्राजले कृतस्नानाः [4]महाकालं प्रणम्य यावन्निर्गच्छन्ति तावद् भैरवानन्दो नाम योगी

---

१. मन्त्रणां कृत्वेत्यर्थः। २. उज्जयनीम्।

३. उज्जयनीसमीपस्थायास्तन्नामिकाया नद्या जले।

४. उज्जयनीस्थां महाकालाख्यां भगवतः शङ्करस्य प्रतिमामित्यर्थः।

संमुखो बभूव । ततस्तं ब्राह्मणोचितविधिना संभाव्य[1] तेनैव सह तस्य मठं जग्मुः । अथ तेन ते पृष्टाः—कुतो भवन्तः समायाताः क्व यास्यथ किं प्रयोजनम् ? । ततस्तैरभिहितम्—वयं [2]सिद्धियात्रिकाः । तत्र यास्यामो यत्र धनाप्तिर्मृत्युर्वा भविष्यतीत्येव निश्चयः । उक्तं च—

दुष्प्राप्याणि बहूनि च लभ्यन्ते वाञ्छितानि द्रविणानि ।
अवसरतुलिताभिरलं तनुभिः साहसिकपुरुषाणाम् ॥ २६ ॥

तथा च—

पतति कदाचिन्नभसः खाते पातालोऽपि जलमेति ।
दैवमचिन्त्यं बलवद् बलवान्न तु पुरुषकारोऽपि ॥ २७ ॥
अभिमतसिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण ।
दैवमिति यदपि कथयसि पुरुषगुणः सोप्यदृष्टाख्यः ॥ २८ ॥
भयमतुलं गुरुलोकात्तृणमिव तुलयन्ति साधु साहसिकाः ।
प्राणानद्भुतमेतच्चरितं चरितं ह्युदाराणाम् ॥ २९ ॥
क्लेशस्याङ्गमदत्त्वा सुखमेव सुखानि नेह लभ्यन्ते ।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ ३० ॥
तस्य कथं न चला स्यात्पत्नी विष्णोर्नृसिंहकस्यापि ।
मासांश्चतुरो निद्रां यः सेवति जलगतः सततम् ॥ ३१ ॥
दुरधिगमः परभागो यावत्पुरुषेण साहसं न कृतम् ।
जयति तुलामधिरूढो भास्वानिह जलदपटलानि ॥ ३२ ॥

तत्कथ्यतामस्माकं कश्चिद्धनोपायो [3]विवरप्रवेश–शाकिनीसाधन–श्मशानसेवन-महामांसविक्रय-साधकवर्तिप्रभृतीनामेकतम इति । अद्भुत-शक्तिर्भवाञ्श्रूयते । वयमप्यतिसाहसिकाः । उक्तं च –

---

१. पूजयित्वा । २. स्वकार्यसिद्धये यात्राकारिणः ।
३. विवरप्रवेशः = धनप्राप्त्यर्थं पाताल प्रति प्रयाणम्, शाकिनीसाधनम् = तन्नामिकायाः कस्याश्चिद्योगिन्याः साधनम् = अनुष्ठानविशेषेण वशीकरणम् श्मशानसेवनम् = रात्रौ श्मशानभूमौ स्थित्वा निजाभिप्रायसिद्धये मन्त्रादीनां साधनम्। महामांसविक्रयः = महामांसस्य नरमांसस्य बलिप्रदानोचितस्य पुरुषस्येति यावत् विक्रयः = मूल्येन दानम् साधकवर्तिः = भूगर्भस्थनिधेः सूचिका वर्तिः = वर्तिका यस्या बलेन भूमिस्थस्य निधेः सुखेनान्वेषणं भवतीत्यर्थः, एतदादीनां मध्यादेक-तमः = अन्यतमः कोप्युपा ः कथनीय इति भावः ।

महान्त एव महतामर्थं साधयितुं क्षमाः।
ऋते समुद्रादन्यः को बिभर्ति वडवानलम् ॥ ३२ ॥

भैरवानन्दोऽपि तेषां सिद्ध्यर्थं बहूपायं सिद्धवर्तिचतुष्टयं कृत्वार्पयत् आह च—गम्यतां हिमालयदिशि। तत्र सम्प्राप्तानां यत्र वर्तिः पतिष्यति तत्र निधानमसन्दिग्धम्[1] प्राप्स्यथ। तत्र स्थानं खनित्वा निधिं गृहीत्वा [2]व्याघुट्यताम्। तथानुष्ठिते तेषां गच्छतामेकतमस्य हस्ताद्वर्तिर्निपपात। अथासौ यावत्तं प्रदेशं खनति तावत् ताम्रमयी भूमिः। ततस्तेनाभिहितम्—अहो! गृह्यतां स्वेच्छया ताम्रम्। अन्ये प्रोचुः—भो! मूढ! किमनेन क्रियते। तत्प्रभूतमपि दारिद्र्यं न नाशयति। तदुत्तिष्ठ। अग्रतो गच्छामः। सोऽब्रवीत्-यान्तु भवन्तः। नाहमग्रे यास्यामि। एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः। ते त्रयोऽप्यग्रे प्रस्थिताः। अथ किञ्चिन्मात्रं गतस्याग्रेसरस्य[3] वर्तिर्निपपात। सोऽपि यावत्खनितुमारब्धस्तावद् [4]रूप्यमयी क्षितिः। ततः प्रहर्षितः प्राह—यद् भो! भो! गृह्यतां यथेच्छया रूप्यम्। नाग्रे गन्तव्यम्। तावूचतुः—भोः! पृष्ठतस्ताम्रमयी भूमिः, अग्रतो रूप्यमयी तन्नूनमग्रे सुवर्णमयी भविष्यति। तदनेन प्रभूतेनापि दारिद्र्यनाशो न भवति। तदावामग्रे यास्यावः। एवमुक्त्वा द्वावप्यग्रे प्रस्थितौ। सोऽपि स्वशक्त्या रूप्यमादाय निवृत्तः। तयोरपि गच्छतोरेकस्याग्रे वर्तिः पपात। सोऽपि प्रहृष्टो यावत्खनति तावत्सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह—भो! गृह्यतां स्वेच्छया सुवर्णम्। सुवर्णादन्यन्न किंचिद् उत्तमं भविष्यति। स प्राह—मूढ! न किञ्चिद्वेत्सि। प्राक् ताम्रम्, ततो रूप्यम्, ततः सुवर्णम्। तन्नूनमतःपरं रत्नानि भविष्यन्ति। येषामेकतमेनापि दारिद्र्यनाशो भवति। तदुत्तिष्ठ। अग्रे गच्छावः। किमनेन भारभूतेनापि प्रभूतेन। स आह-गच्छतु भवान्। अहमत्र स्थितस्त्वां[5] प्रतिपालयिष्यामि। तथानुष्ठिते सोऽपि गच्छन्नेकाकी [6]ग्रीष्मार्कप्रतापसन्तप्ततनुः [7]पिपासाकुलितः सिद्धिमार्गच्युत इतश्चे-

---

१. अवश्यम्। २. प्रत्यागम्यताम्। ३. अग्रगामिनः। ४. रजतमयीत्यर्थः। ५. तव प्रतीक्षां करिष्यामीत्यर्थः।
६. ग्रीष्मार्कस्य = निदाघकालिकस्य रवेः प्रतापेन = सम्यक्तपनेन सन्तप्ता = प्राप्तसन्तापा तनुः = गात्रं यस्य स तथोक्तः ७. अत्यन्तं पिपासुरित्यर्थः।

तश्च बभ्राम । अथ भ्राम्यन्स्थलोपरि पुरुषमेकं [1]रुधिरप्लावितगात्रं [2]भ्रमच्चक्रमस्तकमपश्यत् । ततो द्रुततरं गत्वा तमवोचत् भोः ! को भवान् । किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि । तत्कथय मे यदि कुत्रचिज्जलमस्ति । एवं तस्य प्रवदतस्तच्चक्रं तत्क्षणात्तस्य शिरसो ब्राह्मण-मस्तके [3]चटितम् । स आह—भद्र ! किमेतत् ? । स आह—ममाप्ये-वमेवैतच्छिरसि चटितम् । स आह—तत्कथय कदैतदुत्तरिष्यति[4] महती मे वेदना वर्तते । स आह—यदा त्वमिव कश्चिद् धृतसिद्ध-वर्तिरेवमागत्य त्वामालापयिष्यति[5] तदा तस्य मस्तके चटिष्यति । स आह—कियान्कालस्तवैवं स्थितस्य स आह—साम्प्रतं को राजा धरणीतले ? । स आह—वीणावत्सराजः । स आह—अहं तावत्काल-संख्यां न जानामि । परं यदा रामो राजासीत्तदाहं दारिद्र्योपहतः सिद्ध-वर्तिमादायानेन पथा समायातः ततो मयान्यो नरो मस्तकधृतचक्रो दृष्टः पृष्टश्च ततश्चैतज्जातम । स आह–भद्र ! कथं तवैव स्थितस्य भोजन-जलप्राप्तिरासीत् । स आह—भद्र ! कथं धनदेन निधानहरणभयात्सिद्धाना-मेतच्चक्रपतनरूपं भयं दर्शितम् । तेन कश्चिदपि नागच्छति । यदि कश्चि-दायाति स क्षुत्पिपासानिद्रारहितो जरामरणवर्जितः केवलमेवं वेदना-मनुभवतीति । तदाज्ञापय मां स्वगृहाय । इत्युक्त्वा गतः । अथ तस्मिंश्चि-रयति[6] स सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपङ्क्त्या यावत्किञ्चिद्वना-न्तरमागच्छति तावद्रुधिरप्लावितशरीरस्तीक्ष्णचक्रेण मस्तके भ्रमता सवेदनः [7]क्वणन्नुपविष्टस्तिष्ठति । तत्समीपवर्तिना भूत्वा सबाष्पं पृष्टः—भद्र ! किमेतत् । स आह—[8]विधिनियोगः । स आह—कथं तत् । कथय कारणमेतस्य । सोऽपि तेन पृष्टः सर्व चक्रवृत्तान्तमकथयत् । तच्छ्रुत्वासौ तं विगर्हयन्निदमाह भो ! निषिद्धस्त्वं मयानेकशो न शृणोषि

---

१. रुधिरेण = रक्तेन प्लावितं = सिक्तं गात्रं यस्य तम् ।
२. भ्रमत् = भ्रमिं कुर्वत् चक्रं यत्र तादृशं मस्तकं शिरो यस्य तम् ।
३. आपतितम्
४. अपगमिष्यति दूरीभविष्यतीति यावत् ।
५. त्वया सह वार्तालापं करिष्यति ।
६. विलम्बं कुर्वति सतीत्यर्थः ।
७. विलपन् ।
८. दुर्दैवस्य फलमित्यर्थः ।

मे वाक्यम्। तत्किं क्रियते। विद्यावानपि कुलीनोऽपि बुद्धिरहितः। अथवा साध्विदमुच्यते—

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः॥ ३४॥

चक्रधर आह—कथमेतत्। सुवर्णसिद्धिराह—

## कथा (३)

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रभावमुपगता वसन्ति स्म। तेषां त्रयः शास्त्रपारङ्गताः, परन्तु [1]बुद्धिरहिताः। एकस्तु बुद्धिमान्, केवलं शास्त्रपराङ्मुखः। अथ तैः कदाचिन्मित्रैर्मन्त्रितम्—को गुणो विद्याया येन देशान्तरं गत्वा भूपतीन् परितोष्यार्थोपार्जना[2] न क्रियते। तत्पूर्वदेशं गच्छामः। तथानुष्ठिते किञ्चिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह—अहो! अस्माकमेकश्चतुर्थो मूढः केवलं बुद्धिमान्। न च राजप्रतिग्रहो बुद्ध्या लभ्यते विद्यां विना। तन्नास्मै स्वोपार्जितं दास्यामि तद्गच्छतु गृहम्। ततो द्वितीयेनाभिहितम्—भोः! सुबुद्धे। गच्छ त्वं स्वगृहे, यतस्ते विद्या नास्ति। ततः तृतीयेनाभिहितम्—अहो! न युज्यत एवं कर्तुम्। यतो वयं बाल्यात्प्रभृत्येकत्र क्रीडिताः। तदागच्छतु [3]महानुभावोऽस्मदुपार्जितवित्तस्य समभागी भविष्यति। उक्तं च—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥ ३५॥

तद् आगच्छतु एषोऽपि इति। तथा अनुष्ठिते, तैः मार्गाश्रितैः अटव्यां मृतसिंहस्यास्थीनि दृष्टानि। ततश्च एकेन अभिहितम्—अहो! अद्य [4]विद्याप्रत्ययः क्रियते। किञ्चिदेतत्सत्त्वं मृतं तिष्ठति, तद् विद्याप्रभावेण जीवनसहितं कुर्मः, अहम् अस्थिसञ्चयं करोमि। ततश्च तेन औत्सुक्याद् अस्थिसञ्चयः कृतः। द्वितीयेन चर्ममांसरुधिरं संयोजितम्। तृतीयोऽपि यावज्जीवनं सञ्चारयति, तावत्सुबुद्धिना निषिद्धः—भोः! तिष्ठतु भवान्। एष सिंहो निष्पाद्यते यद्येनं सजीवं करिष्यति ततः सर्वा-

---

१. अनुभवहीना इति भावः। २. धनप्राप्तिः।
३. वराक इति भावः। ४. विद्यापरीक्षेत्यर्थः।

नपि व्यापादयिष्यति[1] । इति तेनाभिहितः स आह–धिङ् मूर्ख ! नाहं विद्याया विफलतां करोमि । ततस्तेनाभिहितम्—तर्हि [2]प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि । तथानुष्ठिते यावत् सजीवः कृतस्तावत्ते त्रयोऽपि सिंहेनोत्थाय व्यापादिताः । स च पुनर्वृक्षादवतीर्य गृहे गतः । अतोऽहं ब्रवीमि—'वरं बुद्धिर्न सा विद्या' इति ॥ अतः परमुक्तं च—

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ ३६ ॥

चक्रधर आह—कथमेतत् । सोऽब्रवीत्—

## कथा (४)

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म । [3]बालभावे तेषां मतिरजायत—भो ! देशान्तरं गत्वा विद्याया उपार्जनं क्रियत इति । अथान्यस्मिन्दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः । तत्र च [4]विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दान् यावदेकचित्ततया विद्य कुशलास्ते सर्वे सञ्जाताः ततस्तैश्चतुर्भिर्मिलित्वोक्तम्—वयं सर्वविद्यापारे गताः । तदुपाध्यायमुत्कलापयित्वा[5] स्वदेशे गच्छामः । एवं मन्त्रयित्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिता यावत्किञ्चिन्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ दृष्ट्वा उपविष्टाः सर्वे । अत्रैकः प्रोवाच—केन मार्गेण गच्छामः । एतस्मिन्समये तस्मिन्पत्तने कश्चिद्वणिक्पुत्रो मृतः । तस्य दाहार्थे [6]महाजनो गतोऽभूत् । ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम्—

'महाजनो येन गतः स पन्थाः'

इति । तन्महाजनमार्गेण गच्छामः । अथ ते पण्डिता यावन्महाजनमेलापथिकेन[7] सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः । अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम्—

---

१. हनिष्यति । २. प्रतीक्षां कुरु । ३. शैशवे ।
४. विद्यालये । ५. प्रसाद्य । ६. जनसमुदाय इत्यर्थः ।
७. महाजनानां बहूनां जनानां मेला सङ्घः स एव पथिकः पान्थस्तेन जनसमुदायेन सहेत्यर्थः ।

  

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ३७ ॥

तदहो ! अयमस्मदीयो बान्धवः । ततः कश्चित्तस्य ग्रीवायां लगति । कोऽपि पादौ प्रक्षालयति । अथ यावत्ते पण्डिताः [1]दिशामवलोकनं कुर्वन्ति, यावत्कश्चिदुष्ट्रो दृष्टः । तैश्चोक्तम्—एतत्किम् ? । तावत्तृतीयेन पुस्तकमुद्घाट्योक्तम्—

'धर्मस्य त्वरिता गतिः'

तन्नूनमेष धर्मस्तावत् । चतुर्थेनोक्तम्—

'इष्टं धर्मेण योजयेत्'

तद् बान्धवोऽयमस्माकं धर्मेण नियुज्यताम् । अथ तैश्च रासभ उष्ट्र-ग्रीवायां बद्धः । तत्तु केनचित्तत्स्वामिनो रजकस्याग्रे कथितम् श्रुत्वा च यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातः तावत्ते [2]प्रनष्टाः । ततः यावदग्रे किञ्चित्स्तोकं[3] मार्गं यान्ति, तावत्काचिन्नदी समासादिता । तत्तस्या जलमध्ये [4]पलाशपत्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम्—

'आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति'

एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते, तावत्तं नीयमानवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम्—

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥ ३८ ॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः । अथ तैश्च पश्चाद्गत्वा कश्चिद् ग्राम आसादितः । तेऽपि ग्रामीणैर्निमन्त्रिताः पृथक्पृथग्गृहेषु नीताः । तत एकस्य [5]सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता । ततो विचिन्त्य पण्डितेनोक्तम्—यत्—

'दीर्घसूत्री विनश्यति'

---

१. इतस्ततः पश्यन्तीत्यर्थः । २. पलायिता इति यावत् ।
३. किञ्चिदित्यर्थः । ४. किंशुकाख्यस्य वृक्षस्य पर्णम् ।
५. सूत्रखण्डम् ( सेवई ) इति भाषा ।

एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य [1]मण्डकाः दत्ताः। तेनाप्युक्तम्—

'अतिविस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्'

स च भोजनं त्यक्त्वा गतः। अथ तृतीयस्य [2]वटिकाभोजनं दत्तम्। तत्रापि पण्डितेनोक्तम्—

'छिद्रेष्वनर्था बहुलीभवन्ति'

एवं ते त्रयोऽपि पण्डिताः [3]क्षुत्क्षामकण्ठा लकैर्हास्यमानास्ततः स्थानात्स्वदेशं गताः। अथ सुवर्णसिद्धिराह—यत्त्वं लोकव्यवहारमजानन् मया वार्यमाणोऽपि न स्थितः, तत ईदृशीमवस्थामुपगतः। अतोऽहं ब्रवीमि—'अपि शास्त्रेषु कुशलाः' इति॥ तच्छ्रुत्वा चक्रधर आह—अहो! [4]अकारणमेतत्।

सुबुद्धयोऽपि नश्यन्ति दुष्टदैवेन नाशिताः।
स्वल्पधीरपि तस्मिँस्तु कुले नन्दति सन्ततम्॥ ३९॥

उक्तं च—अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति॥ ४०॥

तथा च—शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे! क्रीडामि विमले जले॥ ४१॥

सुवर्णसिद्धिराह—कथमेतत्। स आह—

## कथा (५)

कस्मिंश्चिज्जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः स्म। अथ तयोरेकबुद्धिर्नाम मण्डूको मित्रतां गतः। एवं ते त्रयोऽपि [5]वेलायां कञ्चित्कालं सुभाषितगोष्ठीसुखमनुभूय भूयोऽपि सलिलं प्रविशन्ति। अथ कदाचित्तेषां [6]गोष्ठीगतानां जालहस्तधीवराः

---

1. मिष्टान्नविशेषाः।
2. पिष्टकविशेषः 'वड़ा' इति लोके।
3. बुभुक्षिता इत्यर्थः।
4. अयुक्तमिति यावत्।
5. जलाशयतटे।
6. परस्परं संलपतामिति भावः।

प्रभूतैर्मत्स्यैर्व्यापादितैर्मस्तके विधृतैरस्तमनवेलायां[1] तस्मिञ्जलाशये समायाताः। ततः सलिलाशयं दृष्ट्वा मिथः प्रोचुः—बहुमत्स्योऽयं ह्रदो दृश्यते, स्वल्पसलिलश्च। तत्प्रभातेऽत्रागमिष्यामः। एवमुक्त्वा स्वगृहं गताः। मत्स्याश्च विषण्णवदना मिथो मन्त्रं चक्रुः। ततो मण्डूक आह—भोः! शतबुद्धे! श्रुतं धीवरोक्तं भवता। तत्किमत्र युज्यते कर्तुम्। पलायनमवष्टम्भो[2] वा। यत्कर्तुं युक्तं भवति तदादिश्यतामद्य। तच्छ्रुत्वा सहस्रबुद्धिः प्रहस्य आह—भो! मित्र! मा भैषीः। यतो वचन मरणमात्रादेव भयं न कार्यम्—उक्तञ्च—

> सर्पाणां च खलानां च सर्वेषां दुष्टचेतसाम्।
> अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत्॥ ४२॥

तावत्तत्तेषामागनमपि न सम्पत्स्यते। भविष्यति वा तर्हि त्व बुद्धिप्रभावेणात्मसहितं रक्षयिष्यामि। यतोऽनेकां[3] सलिलगतिचर्यामहं जानामि। तदाकर्ण्य शतबुद्धिराह—भो! युक्तमुक्तं भवत सहस्रबुद्धिरेव भवान्। अथवा साध्विदमुच्यते—

> बुद्धेर्बुद्धिमतां लोके नास्त्यगम्यं हि किंचन।
> बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः॥ ४३॥

तथा च—न यत्रास्ति गतिर्वायो रश्मीनां च विवस्वतः।
> तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा॥ ४४॥

ततो वचनश्रवणमात्रादपि [4]पितृपर्यायागतं जन्मस्थानं त्यक्तुं न शक्यते। उक्तं च—

> न तत्स्वर्गेऽपि सौख्यं स्याद्दिव्यस्पर्शनशोभने।
> कुस्थानेऽपि भवेत्पुंसां जन्मनो यत्र सम्भवः॥ ४५॥

तन्न कदाचिदपि गन्तव्यम्। अहं त्वां सुबुद्धिप्रभावेण रक्षयिष्यामि। मण्डूक आह—भद्रौ! मम तावदेकैव बुद्धिः पलायनपरा। तदहमन्यं जलाशयमद्यैव सभार्यो यास्यामि। एवमुक्त्वा स मण्डूको रात्रावेवान्य-

---

१. सूर्यास्तसमये। २. गुप्तरूपेणावस्थानम्।
३. बहुविधं जलगमनप्रकारमिति भावः। ४. कुलक्रमागतम्।

जलाशयं गतः । [1]धीवरैरपि प्रभात आगत्य [2]जघन्यमध्यमोत्तम-जलचरा मत्स्यकूर्ममण्डूककर्कटादयो गृहीताः । तावपि शतबुद्धिसहस्रबुद्धी सभार्यौ पलायमानौ चिरमात्मानं गतिविशेषविज्ञानैः कुटिलचारेण रक्षन्तौ अपि जाले पतितौ व्यापादितौ च । अथापराह्णसमये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः । गुरुत्वाच्चैकेन शतबुद्धिः स्कन्धे कृतः । सहस्रबुद्धिः प्रलम्बमानो नीयते । ततश्च [3]वापीकण्ठोपगतेन मण्डूकेन तौ तथा नीयमानौ दृष्ट्वाभिहिता स्वपत्नी—प्रिये ! पश्य, पश्य—

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः ।
एकबुद्धिरहं भद्रे ! क्रीडामि विमले जले ॥ ४६ ॥

अतश्च 'वरं बुद्धिर्न सा विद्या' इत्यादि यद् भवता उक्तं, तत्रेयं मे मतिः यत् नैकान्ते[4] बुद्धिरपि प्रमाणम् । सुवर्णसिद्धिः आह—यद्यपि एतदस्ति, तथापि मित्रवचनं न लङ्घनीयम् । परं किं क्रियते, निवारितोऽपि मया न स्थितोऽतिलौल्यात् विद्याहङ्कारात्त्व । अथवा साध्विदमुच्यते ।

साधु मातुल ! गीतेन मया प्रोक्तोऽपि न स्थितः ।
अपूर्वोऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणम् ॥ ४७ ॥

चक्रधर आह—कथमेतत् । सोऽब्रवीत—

## कथा (६)

कस्मिंश्चिदधिष्ठान उद्धतो नाम गर्दभः प्रतिवसति स्म । स सदैव रजकगृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छाया पर्यटति । ततः प्रत्यूषे बन्धनभयात्स्वयमेव रजकगृहमायाति । रजकोऽपि ततस्तं बन्धनेन नियुनक्ति । अथ तस्य रात्रौ पर्यटतः क्षेत्राणि कदाचिच्छृगालेन सह मैत्री संजाता । स च [5]पीवरत्वात् [6]वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रे

---

१. मत्स्यजीविभिः 'मल्लाह' इतिख्यातैः ।
२. जघन्याः = नीचाः, मध्यमाः = साधारणाः उत्तमाः = उत्कृष्टजातीयाः, जलचराः, = जलचारिणः । ३. वाप्याः = दीर्घिकायाःकण्ठोपगतेन = समीपवर्तिना ।
४. एकान्ते = एकान्ततः सर्वथेतिभावः । ५. स्थूलकायत्वात् ।
६. क्षेत्राणां समस्तादन्नादिरक्षणार्थं काष्ठादिभिः कृतं वेष्टनं भङ्क्त्वेत्यर्थः ।

शृगालसहितः प्रविशति। एवं तौ यदृच्छया [1]चिर्भटिकाभक्षणं कृत्वा अन्यहं [2]प्रत्यूषे स्वस्थानं व्रजतः। अथ कदाचित्तेन मदोद्धतेन रासभेन क्षेत्रमध्यस्थितेन शृगालोऽभिहितः—भो! भगिनीसुत! पश्य पश्य, अतीव निर्मला रजनी। तदहं गीतं करिष्यामि। तत्कथय कतमेन [3]रागेण करोमि स आह—माम! किमनेन वृथानर्थप्रचालनेन[4]। यतश्चौरकर्मप्रवृत्तावावां निभृतैश्च[5] चौरैरत्र[6] स्थातव्यम। उक्तं च—

कासयुक्तस्त्यजेच्चौर्यं निद्रालुश्चेत्स चौरिकाम्।
जिह्वालौल्यं रुजाक्रान्तो जीवितं योऽत्र वाञ्छति॥ ४८॥

अपरं त्वदीयं गीतं न मधुरस्वरम। शङ्खशब्दानुकारं दूरादपि श्रूयते। तदत्र क्षेत्रे रक्षापुरुषाः सुप्ताः सन्ति। त उत्थाय वधं बन्धं का करिष्यन्ति। तद्भक्षय तावदमृतमयीश्चिर्भटीः। मा त्वमत्र गीतव्यापार-परो भव तच्छ्रुत्वा रासभ आह—भो! वनाश्रयत्वात्त्वं गीतरसं न वेत्सि। तेनैतद् ब्रवीषि। उक्तं च—

शरज्ज्योत्स्नाहते दूरं नमसि प्रियसन्निधौ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा॥ ४९॥

शृगाल आह—माम! अस्त्येतत्। परं न वेत्सि त्वं गीतम्। केवल-मुन्नदसि[7]। तत्किं तेन [8]स्वार्थभ्रंशकेन। रासभ आह—धिग्धिङ्मूर्ख किमहं न जानामि गीतम्!। तद्यथा तस्य भेदाः, शृणु—

सप्त स्वरास्त्रयो ग्रामा मुर्च्छनाश्चैकविंशतिः।
तालास्त्वेकोनपञ्चाशत्तिस्रो मात्रा लयास्त्रयः॥ ५०॥
स्थानत्रयं यतीनाञ्च षडास्यानि रसा नव
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत्ततः स्मृताः॥ ५१॥
पञ्चाशीत्यधिकं ह्येतद् गीताङ्गानां शतं स्मृतम्।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम॥ ५२॥
नान्यद् गीतात्प्रियं लोके देवानामपि दृश्यते।
शुष्कस्नायुस्वराह्लादात्त्र्यक्षं जग्राह रावणः॥ ५३॥

---

1. चिर्भटिकायाः 'ककड़ी' इति ख्यातायाः भक्षणम्। 2. प्रभाते। 3. स्वरभेदविशेषेण। 4. निष्प्रयोजनव्यापारेण। 5. नीरवैः। 6. अस्मिन् संसार इत्यर्थः। 7. कर्णकर्कश रेकसे। 8 स्वार्थनाशकेनेत्यर्थः।

तत्कथं भगिनीसुत ! मामनभिज्ञं वदन्निवारयसि । शृगाल आह—माम ! यद्येव तदहं तावद् वृतेर्द्वारस्थितः क्षेत्रपालमवलोकयामि । त्वं पुनः स्वेच्छया गीतं कुरु । तथानुष्ठिते [1]रासभरटनमाकर्ण्य [2]क्षेत्रपः क्रोधाद्दन्तान्घर्षयन्[3] प्रधावितः । यावद्रासभो दृष्टस्तावल्लगुडप्रहारैस्तथा-हतः, यथा प्रताडितो भूपृष्ठे पतितः । ततश्च सच्छिद्रमुलूखलं [4]गले बद्ध्वा क्षेत्रपालः प्रसुप्तः । रासभोऽपि स्वजातिस्वभावाद् गतवेदनः क्षणेनाभ्यु-त्थितः उक्तं च—

सारमेयस्य चाश्वस्य रासभस्य विशेषतः ।
मुहूर्तात्परतो न स्यात् प्रहारजनिता व्यथा ॥ ५४ ॥

ततस्तमेवालूखलमादाय वृत्तिं चूर्णयित्वा पलायितुमारब्धः । अत्रा-न्तरे शृगालोऽपि दूरादेव तं दृष्ट्वा सस्मितमाह—

साधु मातुल ! गीतेन मया प्रोक्तोऽपि न स्थितः ।
अपूर्वोऽयं मणिर्बद्धः संप्राप्तं गीतलक्षणम् ॥ ५५ ॥

तद्भवानपि मया वार्यमाणोऽपि न स्थितः[5] । तच्छ्रुत्वा चक्रधर आह—भो ! मित्र ! सत्यमेतत् । अथवा साध्विदमुच्यते—

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः ।
स एव निधनं याति यथा मन्थरकौलिकः ॥ ५६ ॥

सुवर्णसिद्धिराह—कथमेतत् । सोऽब्रवीत्—

## कथा (७)

कस्मिंश्चिदधिष्ठाने मन्थरको नाम [6]कौलिकः प्रतिवसति स्म । तस्य कदाचित् [7]पट्टकर्माणि कुर्वतः [8]सर्वपट्टकर्मकाष्ठानि भग्नानि । ततः स कुठारमादाय वने काष्ठार्थं गतः । स च समुद्रतटं यावद् भ्रमन् प्रयातः, तावत् तत्र [9]शिंशपापादपस्तेन दृष्टः । ततश्चिन्तितवान्—महानयं वृक्षो

---

१. रासभशब्दम् । २. क्षेत्रस्वामी । ३. दशन्निति भावः ।
४. उलूखलं हि नाम धान्यादिकण्डनकारणीभूतं दारुनिर्मितं पात्रम् ।
५. नागरूपकर्मणो विरतो नाभूदित्यर्थः ।
६. तन्तुवायः 'जुलाहा' इति प्रसिद्धः ।
७. वसनवयनरूपाणि कार्याणि । ८. वस्त्रवयनसाधनीभूततुरीवेमादीनि ।
९. शिंशपावृक्षः ( सीसो ) इति ख्यातः ।

दृश्यते। तदनेन कर्त्तितेन प्रभूतानि पट्टकर्मोपकरणानि[1] भविष्यन्ति। इत्यवधार्य तस्योपरि कुठारम् उत्क्षिप्तवान्। अथ वृक्षे कश्चिद्व्यन्तरः[2] समाश्रित आसीत्। अथ तेनाभिहितम्—भो! मदाश्रयोऽयं पादपः सर्वथा रक्षणीयः, यतोऽहमत्र महासौख्येन तिष्ठामि [3]समुद्रकल्लोलस्पर्शनाच्छीतवायुनाप्यायितः[4]। कौलिक आह—भोः! किमहं करोमि। दारुसामग्रीं विना मे कुटुम्बकदम्बं[5] बुभुक्षया पीड्यते। तस्मादन्यत्र शीघ्रं गम्यताम्। अहमेनं कर्त्तयिष्यामि। व्यन्तर आह—भोः! तुष्टस्तवाहम्। तत्प्रार्थ्यतामभीष्टं किञ्चित्। रक्षैनं पादपमिति। कौलिक आह—यद्येवं तदहं गत्वा स्वमित्रं स्वभार्यां च पृष्ट्वा आगमिष्यामि ततस्त्वया देयम्। अथ 'तथा' इति प्रतिज्ञाते व्यन्तरेण स कौलिकः प्रहृष्टः स्वगृहं प्रतिनिवृत्तः। यावदग्रे गच्छति तावद् ग्रामप्रवशे निजसुहृदं नापितमपश्यत्। ततस्तस्य व्यन्तरवाक्यं निवेदयामास—यदहो मित्र! मम कश्चिद्व्यन्तरः सिद्धः। तत्कथय किं प्रार्थये। अहं त्वां प्रष्टुमागतः। नापित आह—भद्र! यद्येवं तद्राज्यं प्रार्थय। येन त्वं राजा भवसि, अहं त्वन्मन्त्री च। द्वावपीह सुखमनुभूय परलोकसुखमनुभावः। उक्तं च—

राजा दानपरो नित्यमिह कीर्तिमवाप्य च।
तत्प्रभावात्पुनः स्वर्गं स्पर्धते त्रिदशैः सह॥ ५७॥

कौलिक आह—अस्त्येतत्परम्, तथापि गृहिणीं पृच्छामि। स आह—भद्र! शास्त्रविरुद्धमेतद्यत्स्त्रिया सह मन्त्रः, यतस्ताः स्वल्पमतयो भवन्ति। उक्तं च—

यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता।
तद् गृहं क्षयमायाति भार्गवो हीदमब्रवीत्॥ ५८॥

तावत् स्यात् सुप्रसन्नास्यस्तावद् गुरुजने रतिः।
पुरुषो योषितां यावन्न शृणोति वचो रहः॥ ५९॥

एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः।
न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना॥ ६०॥

---

१. पट्टकर्मणः पटवयनरूपकार्यस्य उपकरणानि = साधनानि।
२. प्राणिविशेषो देवयोनिविशेषो वा।
३. सागरतरङ्गाणां सम्पर्कात्।
४. परिवर्धितः
५. परिवारवर्गः।

कौलिक आह—तथापि प्रष्टव्या सा मया । यतः पतिव्रता सा । अपरं तामपृष्ट्वाहं न किञ्चित्करोमि । एवं तमभिधाय सत्वरं गत्वा तामुवाच—प्रिये ! अद्यास्माकं कश्चिद्व्यन्तरः सिद्धः । स वाञ्छितं प्रयच्छति । तदहं त्वां प्रष्टुमागतः । तत्कथय किं प्रार्थये । एष तावन्मम मित्रं नापितो वदत्येवं यद्राज्यं प्रार्थयस्व । सा आह—आर्यपुत्र ! का मतिर्नापितानाम् । तन्न कार्यं तद्वचः उक्तं च—

चारणैर्वन्दिभिर्नीचैर्नापितैर्बालकैरपि ।
न मन्त्रं मतिमान्कुर्यात्सार्धं भिक्षुभिरेव च ॥ ६१ ॥

अपरं महती [1]क्लेशपरम्परैषा [2]राज्यस्थितिः सन्धिविग्रहयानासनसंश्रयद्वैधीभावादिभिः कदाचित्पुरुषस्य सुखं न प्रयच्छतीति । यतः

यदैव राज्ये क्रियतेऽभिषेकस्तदैव याति व्यसनेषु बुद्धिः ।
घटा नृपाणामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥ ६२ ॥

तथा च—रामस्य व्रजनं वने निवसनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नरस्य नृपते राज्यात्परिभ्रंशनम् ।
सौदासं तदवस्थमर्जुनवधं संचिन्त्य लंकेश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तद्वाञ्छयेत् ॥ ६३ ॥

यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः ।
वधं राज्यकृतां राज्ञां तद्राज्यं दूरतस्त्यजेत् ॥ ६४ ॥

कौलिक आह—सत्यमुक्तं भवत्या । तत्कथय किं प्रार्थये । स आह—त्वं तावदेकं पटं नित्यमेव निष्पादयसि तेन सर्वा [3]व्ययशुद्धिः सम्पद्यते । इदानीं त्वमात्मनोऽन्यद् बाहुयुगलं द्वितीयं शिरश्च याचस्व । येन पटद्वयं सम्पादयसि पुरतः पृष्ठतश्च । एकस्य मूल्येन गृहे यथापूर्वं व्ययं सम्पादयिष्यसि । द्वितीयस्य मूल्येन विशेषकृत्यानि करिष्यसि । एवं सौख्येन स्वजातिमध्ये [4]श्लाघ्यमानस्य कालो यास्यति । [5]लोकद्वयस्योपार्जना भविष्यति । सोऽपि तदाकर्ण्य प्रहृष्टः प्राह—साधु ! पतिव्रते ! साधु ! युक्तमुक्तं भवत्या । तदेवं करिष्यामि । एष मे

---

१. बहुक्लेशप्रदेत्यर्थः । २. राज्यपरिपालनमिति यावत् ।
३. व्ययनिर्वाहः कार्यसिद्धिरिति भावः । ४. प्रशस्यमानस्येत्यर्थः ।
५. लोकपरलोकयोरिति यावत् ।

निश्चयः। ततोऽसौ गत्वा व्यन्तरं प्रार्थयाञ्चक्रे--भो! यदि ममेप्सितं प्रयच्छसि तद्देहि मे द्वितीयं बाहुयुगलं शिरश्च। एवमभिहिते तत्क्षणादेव द्विशिराश्चतुर्बाहुश्च सञ्जातः ततो हृष्टमना यावद् गृहमाच्छति तावल्लोकै राक्षसोऽयमिति मन्यमानैर्लगुडपाषाणप्रहारैस्ताडितो मृतश्च। अतोऽहं ब्रवीमि--'यस्य नास्ति स्वयं प्रज्ञा' इति। चक्रधर आह-भोः! सत्यमेतत्। सर्वोऽपि जनो [1]अश्रद्धेयामाशापिशाचिकां[2] प्राप्य हास्यपदवीं याति। अथवा साध्विदमुच्यते केनापि-

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा॥ ६५॥

सुवर्णसिद्धिराह--कथमेतत्। सोऽब्रवीत्--

## कथा (८)

कस्मिंश्चिन्नगरे कश्चित्स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म। तेन भिक्षार्जितः सक्तुभिर्भुक्तशेषैः[3] कलशः सम्पूरितः। तं च घटं [4]नागदन्तेऽवलम्ब्य तस्याधस्तात्खट्वां निधाय सततमेकदृष्ट्या तमवलोकयति। अथ कदाचिद्रात्रौ सुप्तश्चिन्तयामास-यत्परिपूर्णोऽयं घटस्तावत्सक्तुभिर्वर्तते। तद्यदि दुर्भिक्षं भवति तदनेन [5]रूपकाणां शतमुत्पद्यते। ततस्तेन मया अजाद्वयं ग्रहीतव्यम्। ततः षाण्मासिकप्रसववशात्ताभ्यां यूथं भविष्यति। ततोऽजाभिः प्रभूता गा ग्रहीष्यामि। गोभिर्महिषी, महिषीभिर्वडवाः[6]। वडवाप्रसवतः प्रभूता अश्वा भविष्यन्ति। तेषां विक्रयात्प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुःशालं गृहं सम्पद्यते। ततः कश्चिद् ब्राह्मणो मम गृहमागत्य कन्यां दास्यति। तत्सकाशात्पुत्रो मे भविष्यति। तस्याहं सोमशर्मेति नाम करिष्यामि। ततस्तस्मिञ्जानुचलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वाश्वशालायाः[7] पृष्ठदेश उपविष्टस्तदवधारयिष्यामि[8]। अत्रान्तरे सोमशर्मा मां दृष्ट्वा जनन्युत्सङ्गाज्जानुप्र-

---

१. विश्वासानर्हाम्। २. तृष्णारूपपिशाचीम्। ३. भक्षणादवशिष्टैः
४. वस्त्रादिलम्बनार्थं गृहभित्तिलग्ने दारुदण्डविशेषे 'खूटी' इति भाषायाम्।
५. रूप्यकाणां शतमित्यर्थः। ६. अश्वाः 'घोड़ी' इति भाषायाम्।
७. वाजिशालायाः 'अस्तबल' इति भाषा। ८. पठिष्यामि।

चलनपरोऽश्वखुरासन्नवर्ती मत्समीपमागमिष्यति । ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि—गृहाण तावद्बालकम् । सापि गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति । ततोऽहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि । एवं तेन ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः सक्तुभिः पाण्डुरतां गतः । अतोऽहं ब्रवीमि—'अनागतवतीं चिन्ताम्' इति । सुवर्णसिद्धिराह—एवमेतत् । कस्ते दोषः । यतः सर्वोऽपि लोभेन विडम्बितो बाध्यते । उक्तञ्च—

> यो लौल्यात्कुरुते कर्म नैवोदर्कमवेक्षते ।
> विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥ ६६ ॥

चक्रधर आह—कथमेतत् । स आह—

## कथा (९)

कस्मिंश्चिन्नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म । तस्य पुत्रा वानरक्रीडारता वानरयूथं नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म । अथ वानरयूथाधिपो यः स [1]औशनस-बार्हस्पत्य-चाणक्यमतवित्तदनुष्ठाता[2] च तान्सर्वानप्यध्यापयति स्म । अथ तस्मिन्राजगृहे [3]लघुकुमारवाहनयोग्यं मेषयूथमास्ते । तन्मध्यादेको जिह्वालौल्यादहर्निशं निःशङ्कं महानसे[4] प्रविश्य यत्पश्यति तत्सर्वं भक्षयति । ते च [5]सूपकारा यत्किंचित्काष्ठं मृण्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति तेनाशु ताडयन्ति । सोऽपि वानरयूथपस्तद् दृष्ट्वा व्यचिन्तयत्—अहो ! मेषसूपकारकलहोऽयं वानराणां क्षयाय भविष्यति, यतो [6]अन्नास्वादलम्पटोऽयं मेषः, महाकोपाश्च सूपकारा यथासन्नवस्तुना[7] प्रहरन्ति ।

---

१. उशनसा = शुक्राचार्येण, बृहस्पतिना = देवाचार्येण, चाणक्येन च प्रोक्तानि मतानि = सिद्धान्तान् नीतिशास्त्राणीतिभावः, वेत्ति जानातीति तथोक्तः, ज्ञातविविधनीतिशास्त्रतत्त्व इत्यर्थः । २. नीतिशास्त्रानुसारकार्यकारी । ३. बालकानां यानोपयुक्तम् । ४ पाकगृहे । ५. पाचकाः ( रसोई बनानेवाला । ) ६. अन्नस्य = भक्तादेः, आस्वादे = भक्षणे, लम्पटः = लोलुपोऽत्यन्तमिच्छुक इत्यर्थः । ७. निकटवर्तिना येन केनचिदपि वस्तुना ।

तद्यदि वस्तुनोऽभावात्कदाचिदुल्मुकेन[1] ताडयिष्यन्ति। तदोर्णाप्रचुरोऽयं मेषः स्वल्पेनाऽपि वह्निना प्रज्वलिष्यति। तद्दह्यमानः पुनरश्वकुट्यां[2] समीपवर्तिन्यां प्रवेक्ष्यति। सापि तृणप्राचुर्याज्ज्वलिष्यति। ततोऽश्वा वह्निदाहमवाप्स्यन्ति। [3]शालिहोत्रेण पुनरेतदुक्तम्—यद्वानरवसया[4] श्वानां वह्निदाहदोषः प्रशाम्यति। तन्नूनमेतेन भाव्यमत्र निश्चयः। एवं निश्चित्य सर्वान्वानरानाहूय रहसि प्रोवाच, यतः—

मेषेण सूपकाराणां कलहो यत्र जायते।
स भविष्यत्यसन्दिग्धं वानराणां क्षयावहः॥ ६७॥
तस्मात्स्यात्कलहो यत्र गृहे नित्यमकारणः।
तद् गृहं जीवितं वाञ्छन्दूरतः परिवर्जयेत्॥ ६८॥

तथा च—कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम्।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम्॥ ६९॥

तन्न यावत्सर्वेषां संक्षयो भवति, तावदेतद्राजगृहं सन्त्यज्य वनं गच्छामः। अथ तत्तस्य वचनमश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः–भोः! भवतो वृद्धभावात् [5]बुद्धिवैकल्यं सञ्जातं, येनैतद् ब्रवीषि। उक्तं च—

वदनं दशनैर्हीनं लाला स्रवति नित्यशः।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः॥ ७०॥

न वयं स्वर्गसमानोपभोगान्नानाविधान्भक्ष्यविशेषान्राजपुत्रैः स्वहस्तदत्तानमृतकल्पान्परित्यज्य तत्राटव्यां कषायकटुतिक्तक्षाररूक्षफलानि भक्षयिष्यामः। तच्छ्रुत्वाश्रुकलुषां[6] दृष्टिं कृत्वा स प्रोवाच—रे रे मूर्खाः! यूयमेतस्य सुखस्य परिणामं न जानीथ। किं न [7]पापरसास्वादनप्रायमेतत्सुखं परिणामे विषवद्भविष्यति? तदहं कुलक्षयं स्वयं नावलोकयिष्यामि। सांप्रतं वनं यास्यामि। उक्तं च—

---

१. ज्वलता काष्ठेन। २. अश्वशालायाम्।
३. अश्वविद्याविशारदेन किंवा अश्वचिकित्साशास्त्रप्रवर्तकेनेत्यर्थः।
४. वानरमेदसा। ५. बुद्धेर्नाशः। ६. नेत्राम्बुभिः पूर्णां कृत्वा।
७. पापस्य = दुष्कर्मणः, यो रसः = अनुभवः फलभोग इति यावत्, तस्य यद् आस्वादनं स्वादस्तत्प्रायं तत्सदृशमित्यर्थः परिणामेऽतिविरसमिति यावत्।

मित्रं व्यसनसंप्राप्तं स्वस्थानं परपीडितम् ।
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ७१ ॥

एवमभिधाय सर्वांस्तान्परित्यज्य स यूथाधिपोऽटव्यां[1] गतः। अथ तस्मिन्गतेऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टो यावत्सूपकारेण नान्यत्किञ्चित्समासादितम्; तावदर्धज्वलितकाष्ठेन ताड्यमानो जाज्वल्यमानशरीरः शब्दायमानोऽश्वकुट्यां [2]प्रत्यासन्नवर्तिन्यां प्रविष्टः। तत्र तृणप्राचुर्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि वह्निज्वालास्तथा समुत्थिता यथा केचिदश्वाः स्फुटितलोचनाः [3]पञ्चत्वं गताः, केचिद् बन्धनानि त्रोटयित्वार्धदग्धशरीरा इतश्चेतश्च [4]ह्रेषायमाणा धावमानाः सर्वमपि जनसमूहमाकुलीचक्रुः। अत्रान्तरे राजा सविषादः शालिहोत्रज्ञान् वैद्यानाहूय प्रोवाच—भोः! प्रोच्यतामेषामश्वानां कश्चिद्दाहोपशमनोपायः। तेऽपि शास्त्राणि विलोक्य प्रोचुः—देव! प्रोक्तमत्र विषये भगवता शालिहोत्रेण यत्—

कपीनां मेदसा दोषो वह्निदाहसमुद्भवः ।
अश्वानां नाशमभ्येति तमः सूर्योदये यथा ॥ ७२ ॥

तत्क्रियतामेतच्चिकित्सितं द्राक्, यावदेते न दाहदोषेण विनश्यन्ति। सोऽपि तदाकर्ण्य समस्तवानरवधमादिष्टवान्। किं बहुना सर्वेऽपि ते वानरा [5]विविधायुधलगुडपाषाणादिभिर्व्यापादिता इति। अथ सोऽपि वानरयूथपस्तं पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं ज्ञात्वा परं विषादमुपागतः। स त्यक्ताहारक्रियो वनाद्वनं पर्यटति। अचिन्तयच्च—कथमहं तस्य [6]नृपापसदस्यानृणताकृत्येनापकृत्यं करिष्यामि। उक्तञ्च—

मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम् ।
भयाद्वा यदि वा कामात्स ज्ञेयः पुरुषाधमः ॥ ७३ ॥

अथ तेन वृद्धवानरेण कुत्रचित्पिपासाकुलेन भ्रमता [7]पद्मिनी-

---

१. वने । २. निकटवर्तिन्याम् ।
३. मृता इत्यर्थः । ४. हेषारवं कुर्वाणाः ।
५. विविधैः = नानाप्रकारैः, आयुधैः = प्रहरणैः, लगुडैः = दण्डैः, पाषाणैः = प्रस्तरादिभिश्चेति यावत् । ६. कुत्सितस्य राज्ञ इत्यर्थः ।
७. कमलिनीनां षण्डेन = समूहेन मण्डितं शोभितम् ।

षण्डमण्डितं सरः समासादितम्। तद्यावत् [1]सूक्ष्मेक्षिकयावलोकयति तावद्वनचरमनुष्याणां पदपङ्क्तिप्रवेशोऽस्ति, न निष्क्रमणम्। ततश्चिन्तितम् नूनमत्र जलान्ते दुष्टग्राहेण भाव्यम्। तत्पद्मिनीनालमादाय दूरस्थोऽपि जलं पिबामि। तथानुष्ठिते तन्मध्याद्राक्षसो निष्क्रम्य [2]रत्नमालाविभूषितकण्ठस्तमुवाच—भोः! अत्र यः सलिले प्रवेशं करोति स मे भक्ष्य इति। तन्नास्ति धूर्ततरस्त्वत्समोऽन्यो यः, पानीयमनेन विधिना पिबति। ततस्तुष्टोऽहम्। प्रार्थयस्व हृदयवांछितम्। कपिराह—भोः! कियती ते भक्षणशक्तिः?। स आह—शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि भक्षयामि। बाह्यतः शृगालोऽपि मां दूषयति[3]। वानर आह—अस्ति मे केनचिद् भूपतिना सहात्यन्तं वैरम्, यद्येनां रत्नमालां मे प्रयच्छसि तत्सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि प्रवेशयामि। सोऽपि श्रद्धेयं वचः तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह—भोः! मित्र! यत्समुचितं भवति तत्कर्तव्यमिति। वानरोऽपि रत्नमालाविभूषितकण्ठो वृक्षप्रसादेषु परिभ्रमञ्जनैर्दृष्टः, पृष्टश्च—भो! यूथप! भवानियन्तं कालं कुत्र स्थितः?। भवतेदृग्रत्नमाला कुत्र लब्धा, या दीप्त्या सूर्यमपि तिरस्करोति। वानरः प्राह—अस्ति कुत्रचिदरण्ये गुप्ततरं महत्सरो धनदनिर्मितम्। तत्र सूर्येऽर्धोदिते रविवारे यः कश्चिन्निमज्जति, स [4]धनदप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निःसरति। अथ भूभुजा तदाकर्ण्य स वानरः समाहूतः, पृष्टश्च—भो! यूथाधिप! किं सत्यमेतत्। रत्नमालासनाथं सरोऽस्ति क्वापि। कपिराह—स्वामिन्! एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया [5]प्रत्ययस्ते। तद्यदि रत्नमालया प्रयोजनं तन्मया सह कमपि प्रेषय येन दर्शयामि। तच्छ्रुत्वा नृपतिराह—यद्येवं तदहं सपरिजनः स्वयमेष्यामि। येन प्रभूता रत्नमालाः सम्पद्यन्ते। वानर आह—एवं

---

१. विचारमय्या दृष्ट्या। २. कण्ठे धृतरत्नमयमाल इति भावः।
३. स्थले तु शृगालोऽपि मां पराभवितुं शक्नोतीत्यर्थः।
४. धनदस्य = कुबेरस्य प्रसादात् = अनुग्रहात्, ईदृशा = एवंभूतया रत्न-मालया = रत्नजडितस्रजा, विभूषितकण्ठः = अलङ्कृतग्रीवः।
५. विश्वासः।

क्रियताम् । तथानुष्ठिते भूपतिना सह रत्नमालालोभेन सर्वे कलत्रभृत्याः प्रस्थिताः । वानरोऽपि राज्ञा दोलाधिरूढेन स्वोत्सङ्ग आरोपितः[1] सुखेन प्रीतिपूर्वकमानीयते । अथवा साध्विदमुच्यते—

तृष्णे ! देवि ! नमस्तुभ्यं यया वित्तान्विता अपि ।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥ ७४ ॥



तथा च—इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ ७५ ॥
जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीर्यतश्चक्षुषी श्रोत्रे तृष्णैका तरुणायते ॥ ७६ ॥

अथ तत्सरः समासाद्य वानरः प्रत्यूषसमये राजानमुवाच—देव ! अत्रार्धोदिते सूर्येऽत्र प्रविष्टानां सिद्धिर्भवति । तत्सर्वोऽपि जन एकदैव प्रविशतु । त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्वदृष्टस्थानमासाद्य प्रभूतास्ते रत्नमाला दर्शयामि । अथ प्रविष्टास्ते लोकाः सर्वे भक्षिता राक्षसेन । अथ तेषु [2]चिरायमाणेषु राजा वानरमाह—भोः ! यूथाधिप ! किमिति [3]चिरायते मे जनः ? । तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच—भोः ! दुष्टनरपते ! राक्षसेनान्तःसलिलस्थितेन[4] भक्षितस्ते परिजनः ! साधितं मया कुलक्षयजं वैरम् । तद् गम्यताम् । त्वं स्वामीति मत्वा नात्र प्रवेशितः । उक्तञ्च—

कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ७७ ॥

तत्त्वया मक कुलक्षयः कृतः, मया पुनस्तव इति । अथैतदाकर्ण्य राजा कोपाविष्टः पदातिरेकाकी [5]यथायातमार्गेण निष्क्रान्तः । अथ तस्मिन्भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह—

हतः शत्रुः कृतं मित्रं रत्नमाला न हारिता ।
नालेन पिबता तोयं भवता साधु वानर ! ॥ ७८ ॥

अतोऽहं ब्रवीमि—'यो लौल्यात्कुरुते कर्म' इति ॥ एवमुक्त्वा

---

१. उपवेशितः । २. विलम्बं कुर्वत्सु ।
३. विलम्बं करोति । ४. जलमध्यवर्तिना ।
५. येन मार्गेण आयातस्तेनैव मार्गेण निर्गत इत्यर्थः ।

भूयोऽपि स चक्रधरमाह—भो ! मित्र ! प्रेषय मां येन स्वगृहं गच्छामि। चक्रधर आह—भद्र ! आपदर्थे धनमित्रसंग्रहः क्रियते तन्मामेवंविधं त्यक्त्वा क्व यास्यसि। उक्तञ्च—

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत्।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम् ॥ ७६ ॥

सुवर्णसिद्धिराह—भोः ! सत्यमेतद्यदि [1]गम्यस्थाने शक्तिर्भवति। एतत्पुनर्मनुष्याणामगम्यस्थानम्[2]। नास्ति कस्यापि त्वामुन्मोचयितुं शक्तिः। अपरं यथा-यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि, तथा तथाहमेतज्जानामि यद् द्रागगच्छामि मा कश्चिन्ममाप्यनर्थो[3] भवेदिति। यतः—

यादृशी वदनच्छाया दृश्यते तव वानर !।
विकालेन गृहीतोऽसि यः परैति स जीवति ॥ ८० ॥

चक्रधर आह—कथमेतत्। सोऽब्रवीत्।

## कथा (१०)

कस्मिंश्चिन्नगरे भद्रसेनो नाम राजा प्रतिवसति स्म। तस्य सर्वलक्षणसम्पन्ना रत्नवती नाम कन्यास्ति। तां कश्चिद्राक्षसो [4]जिहीर्षति। परं [5]कृतरक्षोपधानां हर्तुं न शक्नोति। सापि तत्समये रक्षःसान्निध्यजामवस्थामनुभवति कम्पादिभिः। एवमतिक्रामति[6] काले कदाचित्स राक्षसो मध्यनिशायां गृहकोणे स्थितः। सापि राजकन्या स्वसखीमुवाच-सखि ! पश्यैष विकालः समये नित्यमेव मां [7]कदर्थयति। अस्ति तस्य दुरात्मनः प्रतिषेधोपायः कश्चित् !। तच्छ्रुत्वा राक्षसोऽपि व्यचिन्तयत्—नूनं यथाहं तथान्योऽपि कश्चिद्विकालनामास्या हरणाय नित्यमेवागच्छति परं सोऽप्येनां हर्तुं न शक्नोति। तत्तावदश्वरूपं कृत्वाश्वमध्यगतो

१. शक्तिसाध्ये कर्मणि शक्तेः प्रयोगो युक्त इति भावः।
२. मनुष्याणां शक्तितो बहिर्भूतमिति यावत्।
३. अनिष्टप्राप्तिरित्यर्थः।
४. हर्तुमिच्छति।
५. राक्षसनिवारणाय शिरोदत्ताभिमन्त्रितौषधपूर्णोपधानाम्।
६. गच्छति सतीत्यर्थः।
७. पीडयति।

निरीक्षयामि किंरूपः स किम्प्रभावश्चेति। एवं राक्षसोऽश्वरूपं कृत्वाश्वानां मध्ये तिष्ठति। तथानुष्ठिते [1]निशीथसमये राजगृहे कश्चिदश्वचौरः प्रविष्टः। स च सर्वानश्वानवलोक्य तं राक्षसमश्वतमं विज्ञायाधिरूढः। अत्रान्तरे राक्षसश्चिन्तयामास—नूनमेष विकालनामा मां चौरं मत्वा कोपान्निहन्तुमागतः। तत्किङ्करोमि। एवं चिन्तयन्सोऽपि तेन [2]खलीनं मुखे निधाय [3]कशाघातेन ताडितः। अथासौ भयत्रस्तमनाः प्रधावितुमारब्धः। चौरोऽपि दूरं गत्वा खलीनाकर्षणेन तं स्थिरं कर्तुमारब्धवान्। स तु केवलं वेगाद्वेगतरं गच्छति। अथ तं तथा अगणितखलीनाकर्षणं[4] मत्वा चौरश्चिन्तयामास—अहो! नैवंविधा वाजिनो भवन्त्यगणितखलीनाः। तन्नूनमनेनाश्वरूपेण राक्षसेन भवितव्यम्। तद्यदि कश्चित्पांशुलं[5] भूमिदेशमवलोकयामि, तदात्मानं तत्र पातयामि। नान्यथा मे [6]जीवितव्यमस्ति। एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोऽश्वो वटवृक्षस्य तले निष्क्रान्तः। चौरोऽपि वटप्ररोहमासाद्य तत्रैव विलग्नः। ततो द्वावपि तौ पृथग्भूतौ परमानन्दभाजौ जीवितविषये लब्धप्रत्याशौ सम्पन्नौ। अथ तत्र वटे कश्चिद्राक्षससुहृद्वानरः स्थित आसीत्। तेन राक्षसं त्रस्तमालोक्य व्याहृतम्—भो! मित्र! किमेवं पलाय्यतेऽलीकभयेन[7] त्वद्भक्ष्योऽयं मानुषः। भक्ष्यताम्। सोऽपि वानरवचो निशम्य स्वरूपमाधाय शङ्कितमनाः स्खलितगतिर्निवृत्तः। चौरोऽपि तं वानराहूतं ज्ञात्वा कोपात्तस्य लाङ्गूलं लम्बमानं मुखे निधाय चर्वितवान्, वानरोऽपि तं राक्षसाभ्यधिकं मन्यमानो भयान्न किञ्चिदुक्तवान् केवलं व्यथार्तो[8] निमीलितनयनस्तिष्ठति राक्षसोऽपि तं तथाभूतमवलोक्य श्लोकमेनमपठत्—

> यादृशी वदनच्छाया दृश्यते तव वानर!।
> विकालेन गृहीतोऽसि यः परैति स जीवति ॥ ८१ ॥

उक्त्वा प्रनष्टश्च। तत्प्रेषय मां येन गृहं गच्छामि। त्वं पुनरनु-

---

१. अर्धरात्रे। २ कविकाम्। ( लगाम ) इति प्रसिद्धाम्।
३. अश्वादीनां ताडनोपकरणेन ( चाबुक ) इति ख्यातेन।
४. खलीनाकर्षणमुपेक्षमाणमित्यर्थः।
५. धूलिबहुलम्। ६. जीवनरक्षेत्यर्थः।
७. वृथाभयेन। ८. पीडितः।

भुङ्क्त्वात्र स्थित एव लोभवृक्षफलम्। चक्रधरः प्राह—भो ! अकारणमेतत्। दैववशात्सम्पद्यते नृणां शुभाशुभम्। उक्तञ्च—

दुर्गस्त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदाच्च वित्तम्।
शास्त्रं च यस्योशनसा प्रणीतं स रावणो दैववशाद्विपन्नः ॥८२॥

सुवर्णसिद्धिराह—भो ! सत्यमेतत्। दैवानुकूलतया सर्वं कल्याणं सम्पद्यते। तथापि पुरुषेण सतां वचनं कार्यम्[1]। न पुनरेवमेव असंहतेन कदाचिदपि भवितव्यम्। यः खलु एवमेव वर्तते स त्वमिव नूनं विनश्यति। तथा च—

एकोदरा पृथग्ग्रीवा अन्योन्यफलभक्षिणः।
असंहता विनश्यन्ति भारण्डा इव पक्षिणः॥ ८३ ॥

चक्रधर आह—कथमेतत्। सोऽब्रवीत्—

## कथा (११)

कस्मिंश्चित्सरोवरे भारण्डनामा पक्ष्येकोदरःपृथग्ग्रीवःप्रतिवसति स्म। तेन च समुद्रतीरे परिभ्रमता किञ्चित्फलममृतकल्पं तरङ्गाक्षिप्तं सम्प्राप्तम्। सोऽपि भक्षयन्निदमाह—अहो ! बहूनि मया [2]अमृतप्रायाणि [3]समुद्रकल्लोलाहृतानि फलानि भक्षितानि। परमपूर्वोऽस्यास्वादः। तत्किं पारिजातहरिचन्दनतरुसम्भवम्। किं वा किञ्चिदमृतमयफलमव्यक्तेनापि विधिना पतितम्। एवं तस्य ब्रुवतो द्वितीयमुखेनाभिहितम्—भोः यद्येवं तन्ममापि स्तोकं[4] प्रयच्छ, येन [5]जिह्वासौख्यमनुभवामि। ततो विहस्य प्रथमवक्त्रेणाभिहितम्—आवयोस्तावदेकमुदरम्, एका तृप्तिश्च भवति ततः किं पृथग्भक्षितेन। वरमनेन शेषेण प्रिया तोष्यते। एवमभिधाय तेन शेषं भारण्ड्याः प्रदत्तम्। सापि तदास्वाद्य प्रहृष्टतमा बभूव द्वितीयं मुखं तद्दिनादेव प्रभृति सोद्वेगं सविषादं च तिष्ठति। अथान्येद्युः द्वितीयमुखेन विषफलं प्राप्तम्। तद् दृष्ट्वापरमाह—भोः ! [6]निस्त्रिंशपुरुषाधम ! [7]निरपेक्ष ! मया विषफलमासादितम्।

---

१. वृद्धानां वचनं मन्तव्यमित्यर्थः। २. सुमधुराणीत्यर्थः। ३. सागरतरङ्गैरानीतानि। ४. अल्पम्। ५. आस्वादयामीत्यर्थः। ६. कठोरहृदय इति भावः। ७. निर्मम !

तत्त्वापमानाद्भक्षयामि । अपरेणाभिहितम्—मूर्ख ! मा मैवं कुरु । एवं कृते द्वयोरपि विनाशो भविष्यति । अथैवं वदता तेनापमानेन फलं भक्षितम् । किं बहुना । द्वावपि विनष्टौ । अतोऽहं ब्रवीमि—'एकोदराः पृथग्ग्रीवाः' इति ॥ चक्रधर आह—सत्यमेतत् । तद्गच्छ गृहम् । परमेकाकिना न गन्तव्यम् । उक्तञ्च—

एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात् ।
एको न गच्छेदध्वानं नैकश्चार्थान्प्रचिन्तयेत् ॥ ८४ ॥

अपि च—अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम् ॥ ८५ ॥

सुवर्णसिद्धिराह—कथमेतत् । सोऽब्रवीत्—




## कथा (१२)

कस्मिंश्चिदधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणःप्रतिवसति स्म। स च प्रयोजनवशाद् ग्रामे प्रस्थितः स्वमात्राभिहितः-यद्वत्स ! कथमेकाकी व्रजसि । तदन्विष्यतां कश्चिद् द्वितीयः सहायः । स आह-अम्ब ! मा भैषीः । निरुपद्रवोऽयं मार्गः । कार्यवशादेकाकी गमिष्यामि । अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः [1]सकाशात् [2]कर्कटमादाय मात्राभिहितः—वत्स ! अवश्यं यदि गन्तव्यं तदेष कर्कटोऽपि सहायो भवतु । तदेनं गृहीत्वा गच्छ । सोऽपि मातुर्वचनादुभाभ्यां पाणिभ्यां तं संगृह्य कर्पूरपुटिकामध्ये निधाय पात्रमध्ये संस्थाप्य शीघ्रं प्रस्थितः । अथ गच्छन्ग्रीष्मोष्मणा सन्तप्तः कञ्चिन्मार्गस्थवृक्षमासाद्य तत्रैव प्रसुप्तः । अत्रान्तरे वृक्षकोटरान्निर्गत्य सर्पस्तत्समीपमागतः । स च [3]कर्पूरसुगन्धसहजप्रियत्वात्तं परित्यज्य वस्त्रं विदार्याभ्यन्तरगतां कर्पूरपुटिकामतिलौल्यादभक्षयत् । सोऽपि कर्कटस्तत्रैव स्थितःसन् सर्पप्राणानपाहरत् । ब्राह्मणोऽपि यावत्प्र-

---

१. समीपात् । २. कुलीरकम् ( केकड़ा ) इति भाषायाम् ।
३. स्वभावतः कर्पूरसौरभप्रियत्वात् ।

बुद्धः पश्यति तावत्समीपे मृतः कृष्णसर्पो निजपार्श्वे कर्पूरपुटिकोपरि स्थितस्तिष्ठति तं दृष्ट्वा व्यचिन्तयत्—'कर्कटेनायं हतः' इति प्रसन्नो भूत्वाब्रवीत्—भोः! सत्यमभिहितं मम मात्रा यत्पुरुषेण कोऽपि सहायः कार्यः, नैकाकिना गन्तव्यम्। यतो मया [1]श्रद्धापूरितचेतसा तद्वचनमनुष्ठितम्, तेनाहं कर्कटेन सर्पव्यापादनाद्रक्षितः अथवा साध्विदमुच्यते--

क्षीणः स्रवति शशी रविवृद्धो वर्धयति पाथसां नाथम्।
अन्ये विपदि सहाया धनिनां श्रियमनुभवन्त्यन्ये ॥ ८६ ॥
मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ८७ ॥

एवमुक्त्वासौ ब्राह्मणो [2]यथाभिप्रेतं गतः। अतोऽहं ब्रवीमि—'अपि कापुरुषो मार्गे' इति। एवं श्रुत्वा सुवर्णसिद्धिस्तमनुज्ञाप्य स्वगृहं [3]प्रतिनिवृत्तः ॥

## इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रकेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं समाप्तम्।



समाप्तमिदं पञ्चतन्त्रकम्।



१. श्रद्दधतेति यावत्।
२. यथेच्छस्थानं गत इत्यर्थः।
३. प्रतिगतः।

# मध्यमा परीक्षा स्वीकृत ग्रन्थाः—



सुदामाचरित—'बालबोधिनी' व्याख्या सहित
संस्कृत काव्य कथाएँ—श्री बच्चा पाण्डेय शर्मा
संस्कृत की नाट्यकथाएँ—प्रो० कान्तानाथ पाण्डेय
प्रतिमानाटकम्—'प्रकाश' सं० हि० व्याख्या नोट्स
कवितावली ( बालकाण्ड )—'बोलबोधिनी' व्याख्या
संस्कृतव्याकरणम्—सरल सुबोध संस्कृत हिन्दी
निबन्धप्रकाश—संस्कृत निबन्धों का सर्वोत्तम ग्रन्थ
संस्कृत रचनाप्रकाश—प्रो० रमाकान्त द्विवेदी
तर्कामृत—'प्रकाश' संस्कृत-हिन्दी टीका
तर्कसंग्रह—पदकृत्य, 'इन्दुमती' संस्कृत-हिन्दी टीका सम्पूर्ण ०—५०
कारिकावली-मुक्तावली—'मयूख' संस्कृत-हिन्दी टीका सम्पूर्ण ४—५०
कुमारसंभव—'पुंसवनी' संस्कृत-हिन्दी टीका, परीक्षोपयोगी १—५ सर्ग ३—५०
किरात—सुधा संस्कृत-हिन्दी टीका सहित ३—६ सर्ग ३—००
चन्द्रालोक—पौर्णमासी कथाभट्टी संस्कृत-हिन्दी व्याख्या सहित ३—५०
काव्यमीमांसा—मधुसूदनमिश्रकृत संस्कृत हिन्दी व्याख्या १-५ अध्याय १—५०
मध्यकौमुदी—सुधा-इन्दुमती संस्कृत-हिन्दी टीका, नोट्स सहित ५—००
भट्टिकाव्य—चन्द्रकला-विद्योतिनी संस्कृत-हिन्दी व्याख्या परिशिष्ट सहित
१ से ११ सर्ग ८—५० १२ से २२ सर्ग ५—५०
दशकुमार—'बालबोधिनी' संस्कृत-हिन्दी टीका, अपहारवर्मचरितान्त ३—००
पूर्वपीठिका १-२५, पूर्वपीठिका, प्रथम-अष्टम उच्छ्वास २-०० सम्पूर्ण ५—५०
अलङ्कारसारमञ्जरी—मध्यमानिर्धारित १६ अलङ्कारों का पाठ्य ग्रंथ ०—७५
वृत्तरत्नाकर—नारायणी, मणिमयी संस्कृत-हिन्दी टीका सहित ३—५०
हिन्दी निबन्धादर्श—उत्तर मध्यमा परीक्षा निर्धारित पूर्वार्ध २—२५
हिन्दी काव्यमञ्जूषा—आचार्य रमाशंकर पाण्डेय ३—५०

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत सीरीज आफिस, वाराणसी—१